रामचन्द्रभट्टविरचितं

# सभ्याभरणम्

सम्पादकः

पण्डितरामगोविन्दशुक्लः

सम्पूर्णानन्द संस्कृत विश्वविद्यालयः
वाराणसी

SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 124 ]

# SABHYĀBHARAṆAM

OF

## RĀMACANDRA BHAṬṬA

With the commentary 'RAŚMIMĀLĀ'

BY

BHAṬṬA GOVINDA

EDITED BY

PT. RĀMAGOVINDA ŚUKLA
Ex. Research Assistant
Sampurnanand Sanskrit University
Varanasi.




VARANASI

1989

**Research Publication Supervisor—**
**Director, Research Institute,**
Sampurnanand Sanskrit University
Varanasi.

□

**Published by—**
**Dr. Harish Chandra Mani Tripathi**
Publication Officer,
Sampurnanand Sanskrit University
Varanasi–221 002.

□

Available at—
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi–221 002.

□

**First Edition, 1000 Copies**
**Price Rs. 36·00**

□

**Printed by—**
**Gaurishankara Press**
Madhyameshvara,
Varanasi.

सरस्वतीभवन-ग्रन्थमाला

[ १२४ ]

आचार्यरामचन्द्रभट्टविरचितं

# सभ्याभरणम्

भट्टगोविन्दकृतया
रश्मिमालाख्यव्याख्यया
सहितम्

सम्पादकः

पण्डितश्रीरामगोविन्दशुक्लः

अनुसन्धानसहायकचरः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीया-
नुसन्धानसंस्थानस्य



वाराणस्याम्

२०४६ तमे वैक्रमाब्दे   १९११ तमे शकाब्दे   १९८९ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः—
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी।

प्रकाशकः—
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१ ००२.

प्राप्तिस्थानम् —
विक्रयविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१ ००२.

प्रथमं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम्—३६-०० रूप्यकाणि

मुद्रकः—
गौरीशंकर प्रेस,
मध्यमेश्वर,
वाराणसी।

॥ श्रीः ॥

# अवतरणिका

साहित्यशास्त्रं नाम काव्यादिकलापरिशीलनालोचनरचनाप्रधानं शास्त्रम्। यथा आत्मनः जगतश्च स्वरूपपरिचायकत्वाद् दर्शनस्य शास्त्रत्वं तथैव शब्दरूपस्य भगवतः परिचायकत्वाद् व्याकरणस्य साहित्यस्य च शास्त्रत्वम्। तदाह वाक्यपदीये—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥

पुराणेऽपि—

काव्यालापाँश्च ये केचित् गीतकान्यखिलानि च।
शब्दमूर्तिधरस्यैते विष्णोरंशा महात्मनः॥

भागवतेऽपि—

स एव जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः।
मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरा वर्ण इति प्रदिष्टः॥

इत्थं व्याकरणशास्त्रस्येव साहित्यस्यापि शास्त्रत्वम्। 'रसो वै सः' इत्यनेन वेदवाक्येन रसस्य ब्रह्मरूपता रसात्मकवाक्यस्य काव्यत्वात् समग्रस्य साहित्यशास्त्रस्य ब्रह्मविचारकत्वं सिद्ध्यति।

साहित्यशास्त्रं च द्वेधा प्रवर्तते लक्ष्यग्रन्थ-लक्षणग्रन्थात्मना। लक्षण-ग्रन्थेषु साहित्यस्य शास्त्रत्वसाधनम्, लक्ष्यग्रन्थनिर्माणप्रकारः तेषां भेदाश्च वर्णिताः।

लक्ष्यग्रन्थाश्च —काव्य-महाकाव्य-नाटक-नाटिका-प्रकरण-भाण-डिम-प्रहसन-सुभाषितादिभेदेन बहुधा आम्नाताः। एषु चम्पू-कथा-आख्यायिका-आख्यानकभेदेन गद्यकाव्यानि गद्यपद्यमयानि च आम्नातानि।

सुभाषितकाव्येष्वपि सुभाषितत्रिशती, भामिनी विलासः, विदग्धमुखमण्डनम्, प्रभृतीनि काव्यानि लोकलोचनातिथिं नीतानि। यत्र विचारकैः रसगुणदोषरीत्यलङ्कारा प्रदर्शिताः। तत्रायं निर्णयः कृतः काव्यतत्त्वविद्भिः यद् दोषगुणादयो ये गणिताः ते सामान्यतः काव्येषु मान्याः किन्तु केचन दोषाः प्रतिपाद्ये प्रतिपादके च एकशास्त्रनिष्ठे अनेके दोषा अदोषतां केचन च गुणतां भजन्ति। अत एव दर्शनाचार्यः श्रीहर्षः नैषधे दर्शनविषयं प्रतिक्षिपन्नपि न वाच्यतां गतः। साहित्यदर्पणेऽपि वैयाकरणमुख्ये तु प्रतिपाद्येऽथ वक्तरि दुःश्रवत्वं गुणः क्वचिदित्याह। यथा—

देधीङ् वेवीङ् समः कश्चित् गुणवृद्ध्योरभाजनम्।
क्विप्प्रत्ययनिभः कश्चिद् यत्र सन्निहितेन ते।

इत्यादिकाव्येषु अप्रतीत्वं दुःश्रवत्वादिकञ्च स्वीचकार। यद्यपि प्रहेलिकादीनां काव्यत्वं नास्तीति वदन्ति तथापि प्रहेलिका रसिकानां लोकोत्तरमानन्दं ददाति। इदं काव्यमकाव्यं वा भवतु चमत्कारित्वाद् रसे सारः चमत्कार इति वचनाच्च काव्यत्वस्वीकारे विप्रतिपत्तिर्न दृश्यते।

सुभाषितकाव्येषु बहुषु सत्स्वपि यत्र वैयाकरण एव वक्ता श्रोता च स्याताम्, ईदृशा श्लोकास्तु दृष्टाः; परं काव्यं न दृष्टम्। इयं मनसि महती जिज्ञासा आसीत्। भगवतो विश्वनाथस्य कृपया सरस्वतीभवनपुस्तकालये हस्तलिखितग्रन्थसमूहेषु सभ्याभरणं नाम काव्यं हस्ते लगितम्। तत्र गोविन्दभट्टकृता रश्मिमालाभिधाटीकापि आसीत्। पश्चादस्य ग्रन्थस्य अनेका हस्तलिपयरुपलब्धाः। एका लिपिः ग्रन्थकारकृतया टीकया युता खण्डिता लिपिरप्युपलब्धा। यद्यपि सा टीका यदि पूर्णा लभ्येत, तदा सम्पादयेयम् इति विचारः मनसि आसीत्, किन्तु न लब्धा इति सन्तोषं कृत्वा अस्य ग्रन्थस्य सम्पादनमेव वरमिति स्वीकृतम्।

इदं सभ्याभरणं नाम काव्यम् अद्य यावत् सटीकमनुपलब्धं मम जिज्ञासापनोदकं क्वचिद् व्याकरणग्रन्थेषु गणितम्, क्वचिच्च काव्यग्रन्थेषु गणितम् वर्तते। मन्मते तु इदं खण्डकाव्यम् यद्यपि न सर्गगणनया विभक्तम्; किन्तूल्लासगणनया गणितं विद्यते, तथापि खण्डकाव्यत्वे संशयो नास्ति। अत्र

नव संख्याका उल्लासाः सन्ति । तत्र **प्रथमे उल्लासे**-प्रयोजनकथनम्, **द्वितीये उल्लासे** साधुनमस्कारः । **तृतीये उल्लासे**—दुर्जननिन्दा । **चतुर्थे उल्लासे**—उदारप्रशंसा । **पञ्चम उल्लासे**—कृपणनिन्दा । **षष्ठ उल्लासे**—राजवर्णनम् । **सप्तम उल्लासे**—उपकारप्रशंसा । **अष्टम उल्लासे**—नीतिप्रशंसा । **नवम उल्लासे**—दैवप्रशंसा अस्ति ।

अस्य ग्रन्थस्य कर्ता श्रीविश्वनाथभट्टस्य पुत्रः **रामचन्द्रभट्टः** भगवतो रामस्य भक्तः दाक्षिणात्यः अम्लालदेशोद्भवः, महावैयाकरण आसीत् । अनेन स्वग्रन्थस्य एका विस्तृता टीकापि रचिता, या साम्प्रतं **सरस्वतीभवनपुस्तकालये** वाराणस्यामपूर्णैव दृश्यते; किन्तु टीकाकारः भट्टगोविन्दः उल्लासे उल्लासे विशेषः महाटीकायां द्रष्टव्य इति लिखति, येनेयं महाटीका कदाचित् पूर्णापि क्वचिद् भवेदिति दृढ़ं वक्तुं शक्यते ।

टीकाकारः गोविन्दभट्टः विदर्भदेशोद्भवस्य गोदावरीतटवर्तिनः गणितशास्त्रपारगस्य अनन्तदैवज्ञस्य वार्धके काशीवासिनः पौत्रः, भगवतो विश्वनाथाराधनतत्परस्य स्मृतिशास्त्रनिष्ठस्य व्याकरणमहाभाष्याध्यापकस्य दैवज्ञशिरोमणेः नीलकण्ठस्य पुत्रः दैवज्ञः वैयाकरणश्च मुहूर्तचिन्तामणौ पीयूषधाराकारः, काशिराजपूजितः ग्रन्थकारस्य रामचन्द्रस्य पितुः विश्वनाथभट्टस्य शिष्य आसीत् । अनेकैः शिष्यैः प्रार्थितेनानेन रश्मिमालाभिधा टीका सभ्याभरणे अकारि ।

अयं गोविन्दभट्टः कदा स्थितिं लब्धवानिति विचारे पीयूषधारायाः समाप्तिसूचकः श्लोकः प्रमाणम् । यथा—

ज्योतिर्विद्वरनीलकण्ठविदुषः श्रीचन्द्रिकायास्तथा
पुत्रेणाहिगवीप्रसारितधिया मौहूर्तचिन्तामणेः ।
गोविन्देन विनिर्मिते नयविधौ पीयूषधाराभिधे
व्याख्याने हि शुभाशुभप्रकरणं पूर्णत्वमध्यागमत् ॥

एवमेव सभ्याभरणव्याख्याने प्रत्युल्लाससमाप्तौ श्लोकः—

ज्योतिर्विद्वरनीलकण्ठविदुषः श्रीचन्द्रिकायास्तथा
पुत्रेणाहिगवीप्रसारितधिया गोविन्दनाम्ना कृते ।

श्रीसभ्याभरणस्य सुज्ञसुखदेऽल्पे रश्मिमालाभिधे ।
व्याख्याने शशभृत्पुरीवसतिनोल्लासोऽयमाद्यो गतः ।।

इति पुष्पिकासाम्यदर्शनेन पीयूषधाराकारः गोविन्दभट्ट एव सभ्याभरणस्य रश्मिमालाटीकाकारः । एतेनेदमपि सिद्धयति यत् ताजिकनीलकण्ठीग्रन्थस्य रचयिता एवास्य पिता, यस्य परिचयं लिखति पीयूषधारायां गोविन्दभट्टः । यथा—

तस्मिन्विदर्भविषये विषये वितृष्ण-
श्चिन्तामणिर्द्युमणिरेव बभूव मूर्तः ।
जाग्रच्चतुर्मुखचतुर्मुखशायि विद्या-
माद्यां प्रवर्तयितुमज्ञपवित्रकीर्तिः ।।
ज्योतिर्विदुज्ज्वलयशोहरणाय किं वा
चंद्रांशुनिर्मलकलाभरणाय किं वा ।
विद्यासरोरुहदृशः शरणाय किं वा
श्रीमाननंत इति तत्तनयोऽजनिष्ट ।।

यस्मात्पद्माख्यपत्न्यामतिविमलमती वाक्पती दिक्पतीना-
माशाः कासारजाग्रत्स्फुरदधिकयशोरश्मिभिर्व्याप्य भातौ ।
प्राभूता तौ तनूजौ श्रुतिगणगदिताचारधारापवित्रौ
ज्येष्ठः श्रीनीलकण्ठस्तदनुगुणगणालंकृतो रामनामा ।।
सीमा मीमांसकानां कृतसुकृतचयः कर्कशस्तर्कशास्त्रे
ज्योतिःशास्त्रे च गर्गः फणिपतिभणितिव्याकृतौ शेषनागः ।
पृथ्वीशाकम्भरस्य स्फुरदतुलसभामण्डनं पंडितेन्द्रः
साक्षाच्छ्रीनीलकंठः समजनि जगतीमण्डले नीलकण्ठः ।।
रामो हेरम्बभक्तेरधिगतविशदानेकविद्योऽनवद्यो
बुद्धिप्रद्योतमानो गणितगुणवतां मानवानां सुखाय ।
ग्रन्थैर्नानाप्रकारैरतिकठिनतरग्रंथनक्रैर्विशाले
ज्योतिः शास्त्रार्णवे द्राग्दृढतरमतुलं सेतुबंधं चकार ।।

श्रुतिस्मृतिप्रोक्तसमस्तकर्मोपयुक्तमानंदितशिष्टलोकम् ।
मुहूर्तचिंतामणिनामकं स ग्रन्थं व्यधाच्छर्वपुरे स्वपद्यैः ॥
श्रीनीलकण्ठस्य बभूव पत्नी सा चन्द्रिकाख्योभयवंशभूषा ।
नारायणस्येव समुद्रकन्या शर्वस्य गौरीव विराजते या ॥
तस्माद्दैवविदग्रगण्यतिलका श्रीनीलकण्ठात्तया
गोविन्दाख्यसुतोऽजनि स्वगुरुतः संप्राप्तविद्यागणः ।
यः शास्त्रामृतसिंधुबंधुरवचोदीचीषु नित्योदितां
सानंदं समवाप्य भूरिकृतवान् ग्रन्थे श्रमं ज्यौतिषे ॥

एतेन ज्ञायते यत् चिन्तामणेः पुत्रोऽनन्तः, तस्य पुत्रौ नीलकण्ठरामचन्द्रौ । अयं मुहूर्तचिन्तामणेः कर्ता । नीलकंठः अकवरशाहाश्रितजयपुराधीशस्य राजपण्डितः गोविन्दस्य पिता आसीत् । अयं गोविन्दः सभ्याभरणस्य टीकाकारः । अस्य जन्म १६२६ विक्रमे आश्विनशुक्लसप्तम्यां रवौ अभवदिति पीयूषधारायां स्पष्टम् । यथा—

श्रीमद्भूपतिशालिवाहनशके (१४९१) चन्द्राङ्कशक्रैर्मितं
मासीषेऽपरपक्षगे नग (७) तिथौ तिग्मांशुवारे दिने ।
धर्मज्योतिषशास्त्रपाणिनिमहाशास्त्रादिपारंगमात्
सम्भूतः खलु नीलकण्ठविदुषो गोविन्दनामा सुतः ॥

एवं प्रकृतग्रन्थस्य टीकाकारः गोविन्दभट्टः नीलकण्ठतनूजः काश्यामासीत् १६२६ विक्रमाब्दे इत्यत्र नास्ति विवादः ।

अत्र ग्रन्थे नव उल्लासाः सन्ति, इति पूर्वमुक्तम् । अत्र संक्षिप्तः परिचयो दीयते ।

**प्रथमे**—भवतो रामस्य, गुरोः, शिवस्य, पाणिनेः, वार्तिककारस्य, पतञ्जलेः नमस्काररूपं मङ्गलं विधाय पाणिनीयार्थैः श्लिष्टं द्व्यर्थकं सभ्याभरणकाव्यं रचयामीति प्रकाश्य अत्रग्रन्थे काव्यविचारकैः बुधैः गुणदोषौ न द्रष्टव्यौ, यतोऽत्र सूक्तिव्याजेन व्याकरणशास्त्रार्थस्मरणमेवोद्देश्यम् । यतः अत्र वक्ता श्रोता च वैयाकरण एव दुःश्रवत्वादयो दोषा गुणायन्ते, अदोषतां वा व्रजन्ति । व्याकरणाध्ययनस्य प्रयोजकप्रयोजने रक्षोहागमल-

ध्वसन्देहा: । रामावतारस्यापि प्रयोजनं सिद्धमेव । यतो रक्षो रावणस्य हानि: नाशः, तन्मिषेणाविकृतधर्मस्य स्थितिः । लाघवेन प्रत्याहारादिना शास्त्रज्ञानं फलमिव रामः स्मर्तॄणां झटिति मुक्तिदाता अस्ति ।

**द्वितीये** यथा साधव उदारगुणा गरिष्ठाश्च, तथैव आयन्नादय: प्रत्यया अपि फढखछघादीनामुपदेशकाले प्रत्ययत्वेनाद्युदात्ताः । अत एव नाडायनः इत्यादौ अतिशयेन गुरवः गरिष्ठाश्च ।

यस्य साधोः विभाषा साकांक्षे लुङ् इव क्वचिद् विरुद्धभाषा नास्ति परौ भुवोऽवज्ञाने इव अवज्ञानं नास्ति, निन्दकः, इत्यत्र वुञिव यस्य नास्ति, सत्शब्देन प्रथितौ शतृशानचाविव साधवः प्रणम्या भवन्ति । प्रत्ययसंज्ञा इव सुधीः सर्वस्य नमस्यो भवति । तातङ्प्रत्यय इव सुजनः सर्वस्य इष्टचिन्तकः कस्य न नमस्यः । सुब्रह्मण्या (पादबन्धरहितं यजुरात्मकं वाक्यम्) अनेकश्रुतिभिर्भूषितो यथा नमस्यः, तथैव साधवोऽपि । वेदे उदात्तादिगुणस्य क्वचित् तिरोधानं दृश्यते, नतु साधौ; वषट्कार उच्चैस्तरां प्रयुज्यते विकल्पेन; किन्तु देवता अपि साधुं उच्चैस्तरां नित्यमुच्चारयन्ति इति साधवः वौषट् शब्दादप्यधिकाः । यथा स्वादिविभक्तिलोपात् सम्बुद्धिशब्दाः, तथैव स्वं धनं तस्य विभक्तिः वितरणं तेन धनरहिताः साधवः, सम्बुद्धिशब्दसमा एव । यथा सम्बुद्धौ आमन्त्रितस्य चेत्यनेनागतापि अनुदात्तता आमन्त्रितं पूर्वमविद्यमानवद्भवति, तथा साधव अनुदात्ततारहिता भवन्ति । यथा देवदत्तः पचसीत्यत्र क्रियापदे उदात्ततां रक्षति, तथा साधवः कथंचित् संगता रक्षन्ति । साधवः अपरस्वप्रणयिनो न भवन्ति । सम्बोधनपदं परो यः सुः तत्र प्रणयिनो न भवन्ति । सन्तः परसमुन्नतिकराः सम्बोधनपदं च परवर्तिक्रियापदे उदात्ततां रक्षति । सन्तः समासान्तोदात्तेन समाः । यथा आमन्त्रितपदं सुबामन्त्रिते इत्यनेन सर्वस्मै उदात्ततां प्रयच्छति, तथैव साधवोऽपि । यथा देवित्वेतिक्त्वः कित्वात् गुणनिषेधः प्राप्तः, न क्वासेट् इति इटः संगात् गुणवान् भवति । तथैव साधुसंगाद् निर्गुणोऽपि पुरुषः । साधु स्फीत्यावृत्या उत्साहेन च परोपकारी क्रमधातोरधिकः । यतः क्रमधातु वृत्यादिषु आत्मनेपदी । यथा परस्य क्ङिति चेत्यस्य गुणनिषेधं न धातुलोप इति न सहते तथा साधुरपि । क्त्वाप्रत्ययः समानकर्त्तृकयोः पूर्वकाले ज्ञायते, साधुस्तु न समानकर्तृतां वहति ।

यथा रूपप् प्रत्ययः प्रशंसायामेव तथा साधवोऽन्येषाम्। यथा कालोक्तियुक्तो लकारस्तथा साधुरपि। यथा परस्मैपदे सिचि वृद्धिः दुर्वारा, तथैव साधूनामपि।

**तृतीये**—तद्धिते यत्प्रत्ययः साध्वर्थेऽपि भवति सभ्यः इत्यत्र अन्यत्रापि भवति सतीर्थ्यः इत्यत्र अनयो आकारे समानेऽपि तौल्यम्। न एवं सुजन दुर्जनयो भेदः एकः साध्वर्थं ब्रवीति न परः। यथा त्वतलादिप्रत्ययः अनेकैः सह समाविशति, तथा साधुरपि। असाधुस्तु यवादियदिव तद्धितेनापि खञादिना न समाविशति यथा मौद्गीनमिति प्रयोगः न तथा यवीनमिति। साधुः लुबर्थ इव भवति तत्र युक्तवद्व्यक्तिवचने भवतः असाधुस्तु लुगर्थ इव यथा लवणशब्दात् ठक लुकि सति प्रकृतिवल्लिंगवचने न भवतः। यथा वेदे पुनर्वसुशब्दे एकवचनमेव भवति तथा साधुरपि। असाधुस्तु तिष्यपुनर्वस्वोः द्वन्द्वे द्विवचनमेव। अयं विविधं वक्ति। दुर्जनः एकशेष इवान्यस्य किमपि गुणवर्णनं न सहते, साधवस्तु सुबन्त इव राजपुरुष इत्यादावन्यं विना वृत्ति न सहन्ते। साधुः कृञः गन्धनार्थेष्वन्तिमान् त्रीनर्थान् प्रतियत्नप्रकथनोपयोगाख्यानधीते दुर्जनस्तु आदिमान् चतुरोऽर्थमान् गन्धनावक्षेपणसेवनसाहसिक्यरूपानधीतेऽतोऽयमधिकः। यमधातुरिव खल लुप्तानुनासिकः, स्तुतिरहितः सूचनवृत्तिः, यथा उदायत। साधुस्तु मृषधातुरिव तितिक्षार्थे इदं स्तुतिं वा वहन् जयति यथा मर्षितः। दुरात्मानः आदैचसूत्रे अशिदिव सन्ति। यथा आदैचसूत्रेण विधीयमानमात्वं गुणं निवारयति तथा अयं गुणानाच्छादयति। दुर्जन क्ङिदिव गुणवृद्धि परस्य न क्षमते। यथा वेतस्वान् इत्यत्र पदसञ्ज्ञां 'तसौ मत्वर्थे' इति भसंज्ञा वाधते इत्यवबाधनार्थम्। तथैव खलः यस्य साधोरनुवृत्या प्रतिष्ठां गतः, तमेव बाधते यथा द्विगुसमासः स्वनिमित्तभूतस्याणः लोपेन तं द्रष्टुं न क्षमते तथा स्वप्रतिष्ठाकारणमपि सज्जनम्। यथा खलः यत् साहाय्येन पदं प्राप्तवान्, तस्य संकटे मौनं साधयति, तथा सुट् संस्कुरुते इत्यत्र प्राप्तस्य वारणे अविद्यमानवद् भवति। यथा शास्धातोः हौ परे शादेशे कृते अझलन्तत्वाद् धित्वं प्रतिबध्नाति। यथा उपसर्गाः उपकारकाः धातोः, किन्तु अडागमकाले पृथग् भवन्ति, तथा खलः दानमानकाले उपकारिणं पृथक् करोति। मुर्खः कर्म-

कर्त्तेव परकृतमात्मन्यारोपयति। खलः हितेऽपि गुणोत्कर्षं न सहते, तर्हि तदन्येन नीचेन समतां कथं सहताम्। यथा इग्लक्षणे गुणवृद्धी स्तः, तथापि क्ङिति च त एव बाध्येते। तथा गुणप्रवृत्तो खलः विश्वास-भाजनं न। णिलोपः दीर्घबाधनमिव सुजनं बाधते। दुर्जनः कर्मकर्त्तेव। टाबजादिपदमिव दुर्जनः बाधते। दुर्जनः मुगागम इव दृश्यते। अक्षमः खलः। खलः आमन्त्रितपदमिव। खलः आमन्त्रित इव परकार्यं हन्ति। खलः साधुं नीचतां नयति। दुर्जनाः समासोदात्तलक्षणाः। दुर्जनः लकारः इव। खलः क्तः इव। णिलोपः दीर्घमिव बाधते। गुणरहितः क्ङिरिव खलः। युवोरिव दुर्जनः अकाश्रय योग्यः। हलन्तः वृद्धिमिव दुर्जनः बाधते। लोलुवादौ गुणनिषेधः।

**चतुर्थः**—उदारः अदादेश इव। अनञि ल्यबादेशस्येव उदारस्य नञि अप्रीतिः। उपसर्गान् अर्थरहितान् विचारादिपदे संयोज्य सार्थकान् तथा उदारः। डारौरसादेश इवोदारः आत्मीयपरकीयभेदं न जानाति। द्वन्द्व इव अनेकार्थसमर्पक उदारः।

**पञ्चमः**—कृपणः समाहारद्वन्द्वेन समः। शास्त्रे नञ् समासः साधुः कृपणः नकारयुतः न इति वैषम्यम्। चादय इव कृपणाः अनर्थकाः। अजादिः किदिव कृपणः निर्गुणः। प्राचां क्त्वा इव कृपणः। कृपणः अडागमः उदात्ततामिव स्वं पोषयति। कृपणं नञ् समासमिव धिक्।

**षष्ठः**—राज्ञः कीर्तिः सुब्रह्मण्या इव। शेषाधिकार इव राजा। उदात्तसेवितः राजा शुभः। यथा विभक्त्यतं पदं लिङ्गाद्यनेकार्थसमर्थकं तथा राजा। राजपदं बहुव्रीहिपदवत् समासान्तोदात्तम्। उदात्तनुपदे स्थिताः शत्रवः स्वरिताः। अनामपदं निहन्यते उदात्तैः राजभिः। राजा निघातं करोति। आमन्त्रितपदमिव राजा न भवति। संख्यातार्थप्रदो द्विगुः राज-तुल्यो न। रामस्य दानं णिद्वाच्यमप्यणिद्वाच्यम्। रमागमः कुत्रचित् पाणिनेः राज्ञस्तु सदा। पाणिनेः अशते राज्ञः वाचिशीतनिषेध नास्ति। राजा भीरुस्था-नमिति समस्तासमस्तभेद इव भिन्नः। आदेशः पाणिनेरिव राज्ञः नासिद्धः। व्याकरणे समासवृत्तिरनित्या राज्ञि न। चातुर्थिक इव राजा

रामः तद्धित एव। पाणिनेः राजा अधिकः, यतः आदेशबाधः द्विरुक्त्यादि नास्ति।

**सप्तमः**—समासे राजपुरुष इत्यादौ परार्थपरता राज्ञि तथा। राजा व्याकरण इव परार्थसामर्थ्यः। राजा आमन्त्रितपदमिव। बहुव्रीहिवद् राजा शोभते। परोपकारिदेहः तातङ् इव न लुप्यते। दूरान्तिकार्थेभ्यः द्वितीया इव जना शोभन्ते। बहुच् इव राजा अग्रगण्यः शोभते। तमप्-प्रत्यय इव राजा शोभते। विश्वामित्रे मित्रशब्द इव उदारः शोभते। प्रत्ययलोपे अङ्गकार्यमिव उपकारोऽपि न भवति। इक्परिभाषा गुणाय भवति। परनिमित्तकः अजादेशः स्थानिवद् भवति उपकारकत्वात्। स्थानिन्यलाश्रये प्रवृत्तः स्थानिवद्भाव इव उदारः। अजादेशः परकार्येऽसमर्थः हेयः। यथा राजपुरुषः इति परार्थमभिप्राय स्वादियुक्तस्तथोदारोऽपि। उदाराः क्वचिदाभीयशास्त्रसमा क्वचित् त्रिपादी सदृशाः। कर्मकर्ता इव उपकारकः। उपकारी चन्द्रादधिकः। संघातः द्वित्वं भजन् वर्धयति। उपकारहीनः अविद्यमानवद्भाव इव भवति।

**अष्टमः**—आमन्त्रितसुबन्तवद् एकतां गत इव सेवकः फलति। गुणरोधकस्य प्रत्ययस्येव अतिथिः सत्कार्यः। सतां करोतेः सुट् इव अतिथिः अधिकः। प्रकृतिः प्रत्ययमिवातिथिः पुरस्कार्यः। महान् अतिथिं सत्करोति यथा उदात्तलोपेऽपि परम् उदात्तं कुरुते। प्रतिष्ठा उन्मूलिते शत्रौ सुलभा यथा उदात्तलोपे तिबुदात्तो भवति। अग्नावारुणमिव उभयपदवृद्धिः भवति, अन्यथा न। प्रभुत्वयुक्तः आश्रयाय इव अग्नीसोमीयम् दीर्घत्वं प्राप्नोति। अदातुः संज्ञा तद्राजसंज्ञा इवास्ति, राजभूतस्य मित्रस्य समीपे तथा न स्थेयं यतः कर्ताऽपि ण्यन्ते कर्म भवति।

**नवमः**—उदात्तसंगतोऽपि गतिसंज्ञकः उदात्तो न भवति। अत्र विधिरेव कारणम्। अनुकूलविधावडागम इव उदात्तो भवति। आक्वेः प्रत्ययाः कर्तृषु भवन्ति। अनुकूले विधौ विधिः अन्यस्य भोग्यमन्यस्मै प्रयच्छति। यथा सम्बुद्धे-रुदात्तता सुपि। सत्संगतिः गुणसंगेऽपि विधिनैव गुणतामेति, अन्यथा गतेः उदात्तता न भवति। अग्रे वक्रोक्तिः।

इत्थमत्र काव्ये अलंकाराणां सत्वेन काव्यत्वमेवेति वक्तुमुचितम्। अस्य सम्पादनकर्मणि मां नियुज्य विश्वविद्यालयस्य कुलपतिभिः श्रीवेङ्कटाचलमहोदयैः महाननुग्रहः कृत इति भूयो भूयो महाभागस्याधमर्णतां शिरसा वहामि। प्रकाशनकर्मणि प्रकाशनाधिकारी श्रीहरिश्चन्द्रमणित्रिपाठी महत्साहाय्यं कृतवान् इति साधुवादान् वितरामि।

अस्य प्रकाशनेऽनेके चित्तविक्षेपाः उपस्थिता अभवन्, येन अशुद्धयः सम्भवन्ति, तासां निराकरणे विद्वांसोऽनुग्रहं विधास्यन्ति इति अनुग्रहाभिलाषी।

अक्षयतृतीयायाम्,<br>२०४६ विक्रमस्य　　रामगोविन्दशुक्लः

# प्रकरणविषयसूची

॥ श्रीगणेशाय नमः ॥

आचार्यरामचन्द्रभट्टविरचितं

# सभ्याभरणम्

भट्टगोविन्दकृतरश्मिमालाव्याख्यया सहितम्

## अथ प्रथम उल्लासः

[1]तुहिनशिखरिकन्याहृत्सरोजांशुमाली-
पद[2]नमदमृतान्धः कार्यसिध्यैकहेतुः ।
[3]नतिभविकसुविद्यासिद्धिलक्ष्मीप्रदाता,
स जयति गणनाथो विघ्नवल्लीकुठारः ॥ १ ॥

वैदर्भो विषयोऽस्ति धर्मबहुलो भूमीभृतामालयो,
गोदावारिपवित्रिताऽखिलजनो विद्वत्समाजास्पदम् ।
तत्रासीद् गणितार्णवैकतरणिः सौजन्यरत्नाकरो-
ऽनन्तो दैवविदावसच्छिवपुरीं यो वार्धकानेहसि ॥ २ ॥

तस्यात्मजोऽभवदुमातनयांघ्रिसेवी,
श्रीनीलकण्ठविधिवित् स्मृतिशास्त्रनिष्ठः ।
अध्यापिपद् भुजगराजगवीः स शिष्यान्,
सद्ग्रन्थनिर्मितिभवाऽखिलदिक्प्रतिष्ठः ॥ ३ ॥

तत्सूनुः पितृपत्सरोजसततध्यानाप्तविद्योऽस्त्ययम्,
गोविन्दो भुज[4]गाधिराजभणितिव्याख्यानविद्वत्तमः ।
ज्योतिश्शास्त्रपयोधिमन्थनविधौ पीयूषधाराकर-
श्छन्दोलंकृतिकाव्यनाटकखसद्बुद्धिः क्षितीशार्चितः ॥ ४ ॥

---

१. तुहिन-इत्यत आरभ्य रुक्तं रित्यन्ता सप्तश्लोकी ख पु० नास्ति ।

२. पदयोः नमताममृतस्यान्धः = अमृतान्नमित्यर्थः ।

३. मति इति क० ।

४. भुजगाधिराजः—पतञ्जलिः तस्य भणितिःमहाभाष्यम् ।

**अम्लालदेशोद्भवरामचन्द्रो बभूव वैयाकरणः प्रसिद्धः ।**
**चकार सभ्याभरणं दुरूहं सद्व्यर्थमाश्चर्यकरं बुधानाम् ।। ५ ।।**
**तेनैव टीका विहिताऽस्त्यनेकविचारयुक्तातिमहत्प्रतोल्याम् ।**
**गोविन्दरात्तां खलु रश्मिमालां करोति सभ्याभरणस्य टीकाम् ।। ६ ।।**
**श्रीनीलकण्ठस्य गुरोः पदाब्जं ध्यात्वा हृदि प्रेमभरेण तावत् ।**
**प्रयोजनोल्लासमनेकशिष्यैः सम्प्रार्थितोऽहं विवृणोमि सूक्तैः ।। ७ ।।**

अथ दक्षिणदिग्व[1]र्त्यम्लालदेशवर्तिनोऽतिपंडिताः पण्डितसभापाण्डित्योपयुक्तं द्व्यर्थं सभ्याभरणाख्यं ग्रन्थं[2] चिकीर्षवो रामचन्द्रभट्टा विशिष्टशिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकं स्वकुलाराध्यरघुनाथदेवतास्मरणरूपं मङ्गलमनुष्टुभोपनिबध्नन्ति—

**स्मरामो रामचन्द्रस्य पदपङ्कजमञ्जसा ।**
**यद्रजो रञ्जिता लेभे[3] शिलापि गिरमुज्ज्वलाम् ।। १ ।।**

स्पष्टार्थमपि पद्यं व्याख्यायते । वयं रामचन्द्रस्य दाशरथेः पदपङ्कजं चरणकमलं जात्यभिप्रायेणैकवचनं पदपङ्कजम् इत्यर्थः । स्मरामः स्मरणविषयं कुर्मः ।

स्मराम इत्युत्तमपुरुषबहुत्वोक्तेर्वयमिति कर्त्ता लभ्यते । अस्मद्युत्तमः (पा० १।४।१०७) इतिवचनात्तत्र हि प्रयुज्यमानेऽप्रयुज्यमानेऽप्यस्मदीति व्याकृतम् । ग्रन्थकर्तुरेकत्वे तु वयमिति बहुत्वमस्मदो द्वयोश्चेति (पा० १।२।५९) वचनात् । तत् किं पदपङ्कजं शिलापि पाषाणरूपा गौतममहामुनिपत्न्यहल्या नाम्नी । यस्य चरणकमलस्य राजोभी रंजिता संसृष्टा सत्यंजसा शीघ्रमेवोज्ज्वलां विशदवर्णां गिरं वाचं लेभे प्राप । इयं कथा बाल्मीकीये रामायणे बालकाण्डेऽतिप्रसिद्धा । अनेन रामचन्द्रचरणकमलस्यावश्यकता सूचिता । चन्द्रपदन्तु सकललोकानुरञ्जकत्वद्योतनार्थम् । अतएव यच्चरणरजोऽपि शिलायै गिरं ददस्मदादीनां जडबुद्धीनामनवरततच्चरणस्मरणवतामभिमतं वाग्विलासं दास्यतीत्यत्र किमश्चर्यमपिना द्योत्यते । द्रागझटित्यंजसाह्नायद्राङ्क्ष्यंमंक्षुसपदिद्रुते इत्यमरः ।

अथविद्यागुरुं पितरं विश्वनाथाभिधमनुष्टुभा प्रणमति—

**यत्कृपालवलीलायाः सखी वाग्देवतास्वयम् ।**
**तस्मै श्रीविश्वनाथाय ताताय गुरवे नमः ।। २ ।।**

---

१. वर्ति इति ख पुस्तके नास्ति । २. कथं इति ख । ३. लेभि इति ख ।

तस्मै प्रसिद्धाय विश्वनाथनाम्ने गुरवे गायत्र्यादिसकलविद्यादात्रे ताताय पित्रे नमोस्त्वितिशेषः। नमः स्वस्तीत्यादिना (पा० २।३।१६) चतुर्थी सर्वत्र। तस्मै यस्य विश्वनाथस्य कृपा दया तस्याः या लवलीलांशविलासस्तस्याः सखी सहचरी वाग्देवता सरस्वती स्वयमात्मनास्तीत्यध्याहारः। अत एव यत्रास्मदादौ जड्बुद्धिके तत्कृपा जायते तत्र वाचामनायासप्रसरः स्यादिति भावः ॥ २ ॥

अथास्य ग्रन्थस्य पाणिनीयव्याकरणानुसारित्वात् तच्छास्त्रमूलभूतचतुर्दशसूत्रीप्रवर्तकं शिवमनुष्टुभा स्तौति—

**आख्यातुमिव यः स्वस्माच्चतुर्दशजगज्जनिम्।**
**तावन्ति मुनये सूत्राण्युक्तवाँस्तं नुमः शिवम् ॥ ३ ॥**

वयं तं शिवं कल्याणास्पदं शिवनामानं च महादेवं नुमः स्तुमः। णु स्तुतौ। तं कं यः शिवःस्वस्माच्चतुर्दशानां जगतां पातालादीनां सप्तानां भूरादीनां सप्तानां च जनिं जन्म लोकमाख्यातुं वक्तुमिव पाणिनये मुनये तावन्ति चतुर्दशसंख्याकानि अइउण् इत्येवमादीनि हलन्तानि सूत्राणि प्रोक्तवान् ऊचे। यथा महादेवः सृष्टयर्थं चतुर्दशजगतां निर्माणमकरोत् तथा व्याकणे प्रत्याहारनिष्पत्यर्थं पाणिनये चतुदर्शसूत्राण्यकथयत् ॥ ३ ॥

अथ व्याकरशास्त्रप्रवर्तकं पाणिनिमनुष्टुभा प्रणमति—

**प्रथमं विदिताम्नायः संज्ञारूपाण्यनेकधा।**
**व्यधत्त वेधा इव यस्तस्मै पाणिनये नमः ॥ ४ ॥**

तस्मै पाणिनये व्याकरणशास्त्रप्रवर्त्तकाय नमोऽस्तु। तस्मै कस्मै यः पाणिनिः प्रथमं महादेवाद् विदितो ज्ञात आम्नायश्चतुर्दशसूत्री रूपो वर्णसमाम्नायो येन सोऽनेकधा बहुधा संज्ञावृद्धिर्गुणश्चेत्येवमादिकाः, रूपाणि रामः रामौ रामा इत्येवमादीनि च व्यधत्त प्रकटयति स्म। क इव वेधा इव। ब्रह्मेव। यथा ब्रह्मा प्रथमं सृष्टयारम्भे विदित आम्नायो वेदो येन "श्रुतिः स्त्री वेद आम्नाय इत्यमरः।" ब्रह्मा हि पूर्वं वेदं विदित्वा संज्ञारूपाभ्यामतिप्रसिद्धं स्थावरजङ्गमात्मकं पाञ्चभौतिकं जगदनेकप्रकारकं निर्माति स्म। अत्र ब्रह्मोपमया पाणिनेरतिशयितानुभावत्त्वं शास्त्रस्यातिगहनार्थत्वं च सूचितं भवति।

अथ क्रमप्राप्तं पाणिनीयसूत्रार्थविचारकं कात्यायननामानं मुनिमनुष्टुभा नमस्यति—

**यः पाणिनीयार्थमणीनुक्तचिन्तादिघर्षणैः।**
**संस्कृतानर्थिसाचक्रे तं वार्तिककृतं भजे ॥ ५ ॥**

अहं तं वार्तिककृतं भजे नतिपूर्वकं ध्यानमहं कुर्वे । तं कं । वार्तिककृत् पाणिनीयसूत्राणामर्थरूपाः ये मणयस्तानुक्तचिन्ता उक्तानां पाणिनिप्रोक्तानां सूत्राणां चिन्ता सदसद्विचारः आदिशब्देनानुक्तदुरुक्तयोश्च विचारौ । तद्रूपाणि घर्षणादिलोहकारशाणचक्रोपरिसंघट्टनानि चक्रे तैः संस्कृतान् जातसंस्कारानर्थिसात्पाणिनीयस्तत्रार्थमर्थयन्ति । तेऽर्थिनः शिष्यास्तेभ्योऽधीनांश्चक्रे । तदधीनवचने ( पा० सू० ५।४।५४ ) इति सातिः । यथा लोको मणीन् शाणो(स्यो)[१]परिघर्षणेन तेजो विशेषसद्भाववतो गृह्णात्येवं शब्दानपि प्राग्वत्परीक्ष्य गृह्णातीत्यर्थः ।

"उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते ।
तं ग्रन्थं वार्तिकं प्राहुर्वार्त्तिकज्ञा विचक्षणाः ॥"

इति वार्तिकलक्षणम् । तत्करोति वार्तिककृदित्यर्थः ॥ ५ ॥

अथ क्रमप्राप्तं सूत्रवार्तिकार्थविचारचतुरं भाष्यकारपतञ्जलिनामानमुपगीत्यार्यया नमति—

**कृपयाऽकृतसुकृती यः स्वादिवदर्थत्रयव्यक्तिम् ।**
**भुजगपतेरवतारं प्रणतोऽस्मि पतञ्जलिं तमहम् ॥ ६ ॥**

भुजगपतेः शेषमहानागस्यावतारं दक्षिणदिग्वर्तिगोनर्द[२]पर्वतसमीपभूमिस्थितायां सहस्रसंख्याकपाषाणस्तंभनिर्मितायां पट्टशालायां कृतप्रादुर्भावं पतञ्जलिनामानं पाणिन्यादिसकलमुनीश्वरमान्यं ब्राह्मणस्वरूपं प्रणतोऽस्मि । पतञ्जलिमिति शकन्ध्वादित्वात्पररूपम् । ( वा० १।१।६४ ) तं कं यः सुकृती व्याकरणहृदयवेत्तार्थत्रयव्यक्तिं सूत्रवार्तिकस्ववचनानां अतिगूढार्थानां येऽर्था अभिधेयानि तेषां व्यक्तिं प्राकट्यं शिष्याणां कृपया दययाऽकृताऽकार्षीत् । डुकृञ् करणे तस्माध्लुङि, तङि तनादिभ्यस्तथासोः ( पा० २।४।७८ ) इति सिचो वा लुक् । तङो ङित्वाद् गुणाभावः । क इव स्वादिवत् स्वादिः प्रत्यय इव । तेन तुल्यं क्रियाचेद्वतिः ( पा० सू० ५।१।११५ ) इति वतिः । यथा स्वादिः प्रत्ययो यस्माद्विहितस्तस्य वृक्षमित्यादिकस्य प्रातिपदिकस्य यदर्थत्रयं स्वार्थद्रव्यलिंगरूपात्मकं तस्याभिव्यक्तिं करोति । अत्रास्ति मतद्वयं पंचकं

---

१. शाणोपरीति समासः अशुद्धः ।

२. गोनर्द देशः उत्तर प्रदेशे 'गोण्डा' इति नाम्नाः प्रसिद्धः । तत्रत्य एवायमिति पुराविदः । अतएव अयोध्यां आक्रमतः शकान् उन्मूलयितुं स्वपुत्रं अग्निमित्रं प्रेष्य तत्र बिवदतः वृहद्रथशिरःकर्तकस्य पुष्पमित्रस्य पौरोहित्यं संगच्छते ।

प्रातिपदिकार्थस्त्रिकं वा । तत्र स्वार्थद्रव्यलिङ्गसंख्याकारकात्मकः पञ्चकम् इति । यन्निमित्तीकृत्य शब्दः प्रवर्त्तते स स्वार्थः । द्रव्यं व्यक्तिर्घटादिः । लिङ्गं पुंस्त्रीनपुंसकात्मकं, संख्या कारकाद् द्वित्वबहुत्वानि । कारकं कर्मादि । एतत्पञ्चकं प्रातिपदिकेनोच्यत इति । संख्याकारके तु 'वृक्ष' 'वृक्षेण' इत्यादौ द्योतके अपीत्येकः पक्षः । त्रिरूपक्षे स्वार्थद्रव्यलिङ्गानि प्रातिपदिकार्थः । संख्याकारकयोस्तु विभक्त्यर्थत्वमन्वयव्यतिरेकाभ्याम् । अस्मित्रिकपक्षे अयं दृष्टान्तः संजावटीति । यद्यप्यस्मिन्पक्षे 'दधि', 'मधु', अविभर्भवान्'-इत्यादौ प्रत्ययं विनापि संख्याकर्मादिप्रतीतिर्भवति तथापि 'वृक्षा', 'वृक्षान्' इत्यादौ विभक्त्यर्थत्वं न हीयते । यथा 'गर्गा' इत्यादावपत्ययत्रं विनाऽप्य-पत्यं गम्यत एवेति दिक् ॥ ६ ॥

अथ चिकीर्षितग्रन्थाभिधानमनुष्टुभा प्रतिजानीते—

**पाणिनीयार्थकनकैः कलितश्लेषमौक्तिकैः ।**
**तन्यते रामचन्द्रेण सभ्याभरणमुत्तमम् ॥ ७ ॥**

रामचन्द्रेणाचार्येणोत्तमं श्लेषोक्त्या महनीयं सभ्यामरणनामकं सुभा-षितग्रन्थः । अथ च सभ्यानां सभासु साधूनां सभाया यः (पा०सू०४।४।१०५) इति साध्वर्थे यः । तेषामाभरणं भूषणमिवेत्यन्वर्थनामको ग्रन्थस्तन्यते विस्तार्यते । तनोतेर्यकीत्यात्वं वैकल्पिकम् । कीदृशं । श्लेषो नामार्थान्तर-प्रतीतिः । कलितानि सम्बद्धानि श्लेषो नामार्थान्तरप्रतीतिः । कलितानि सम्बद्धानि श्लेषरूपाणि मौक्तिकानि येषु तादृशैः पाणिनिसूत्राणामर्था एव कनकानि सुवर्णानि तैरूपलक्षितम् । उपलक्षणे तृतीया ॥ ७ ॥

अथ काव्यदोषदर्शिनोऽनुष्टुभा प्रार्थयते—

**काव्यस्य गुण[1] दोषौ तु नात्र शङ्क्यौ बुधा यतः ।**
**सूक्तिव्याजेन शास्त्रार्थस्मृतयेऽयमुपक्रमः ॥ ८ ॥**

भो[2]बुधा भवद्भिरोजः प्रसादः समतेत्येवमादयोऽनेके काव्यस्य गुणाः ।

---

१. नात्र गुणचिन्तननिषेधः, दोषदर्शननिषेधे एव वक्तुः तात्पर्यात् । वैयाकरणे वक्तरि विषये च दुःश्रवत्वाप्रतीतत्वादयो काव्यदोषास्तु सुतरामत्र भविष्यन्ति । तथापि शास्त्रार्थस्मरणशीलैः वैयाकरणैरभ्यसनीये ग्रन्थे दुःश्रवत्वादीनां दोषतैव नेति भावः ।

२. वो इति पाठान्तरम् ।

दुष्टं पदं श्रुतिकटु इत्येवमादयोऽनेके काव्यस्य दोषास्तेऽत्र ( काव्य० प्र० ७।१ ) सभ्याभरणाख्ये काव्ये न शङ्क्या नोपक्षेप्याः। मूले जात्यैकवचनम्। कुतः। यतः सूक्तीनां राजादिसभायां तद्वर्णनोक्तिविशेषाणां व्याजेन मिषेण पाणिनिशास्त्रार्थस्मृतयेऽयं वक्ष्यमाण उपक्रमो ग्रन्थप्रारम्भः क्रियते। पाणिनिसूत्रार्थविषयकमहाभाष्याद्यनेकग्रन्थज्ञानविषयकस्वपाण्डित्यख्यापनार्थमिति वाक्यतात्पर्यार्थः। प्रसङ्गतो वेदमीमांसान्यायवेदान्तसाहित्यादिपाण्डित्यज्ञापनार्थं चातएव सामान्यवाचिशास्त्रपदप्रयोगः। मुख्यं त्वत्र व्याकरणशास्त्रमेव विवक्षितं प्रकरणात् ॥ ८ ॥

अथ व्याकरणशास्त्रस्य प्रयोजनं श्लेषेण वर्णयन् लीलाविग्रहधारिणो दाशरथिरामस्य साम्यमुपगीत्यार्ययाह—

**रक्षोहानिमिषाविष्कृतकृतधर्मस्थितिर्जगति ।**
**व्याकरणागम उदितोऽवतार इव सप्तमो जयति ॥ ९ ॥**

जगति भुवने उदितः प्रादुर्भूतः पाणिनिमुखात् व्याकरणमेवागमो वेदस्तत्तुल्यत्वादस्य छन्दोवदृषयः कुर्वन्तीति भाष्योक्तेः। स जयति सर्वोत्कर्षेण वर्तते। सर्वशास्त्रोपयोगित्वात्। उक्तं च—

**"काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्।"**

क इव। सप्तमो विष्णोरवतारो दशरथगृहे लीलाविग्रहप्रादुर्भाव इव जगति जयति स्म। तत्र सूचीकटाहन्यायेन प्रथमं रामपक्षे विशेषणम्। रक्षसां रावणादीनां हानेर्नाशस्य मिषेणाविष्कृता प्रकटिता कृतधर्माणां ऋषीणां देवानाञ्च स्थितिः स्थापनं येन। एतेनास्य तादृशदुष्टकुचेष्टाविलष्टान्तःकरणानां सतां क्लेशपरिहारायैवावतारः। सप्तमत्वं प्रादुर्भावानुक्रमेण। उक्तञ्च पुराणे—

**मत्स्यः कूर्मोऽथ वाराहो नारसिंहोऽथ वामनः।**
**रामो रामश्च रामश्च बुद्धः कल्की च ते दश ॥ १० ॥**

इति।

अवतारा इति वाक्यशेषः। षष्ठो रामः परशुरामो जमदग्न्यपत्यम्। सप्तमो रामस्तु दशरथापत्यम्। अष्टमो रामस्तु बलभद्राख्यः, कृष्णज्येष्ठबन्धुः। व्याकरणपक्षे तु आविष्करणमाविष्कृतम्। नपुंसके भावे क्तः ( पा० ३।३।११४ ) इति क्तः। तथा चानिमिषस्य साधुशब्दरूपस्य वेदस्येत्यर्थः।

"सुरमत्स्यावनिमिषावित्यमरः"। तस्याविष्कृतं प्रकटनमनिमिषाविष्कृतम्। रक्षा चोहश्चानिमिषाविष्कृतञ्च तैः कृता धर्मस्य साधुशब्दोच्चारणरूपस्य स्थितिर्मर्यादा येनेति समासः। एवञ्च व्याकरणेनैव रक्षोहसाधुशब्दज्ञानं जायत इत्यर्थः। तद्यथा—रक्षा वेदसंरक्षणम्। कथं। अवैयाकरणो लौकिकप्रयोगेषु लोपागमवर्णविकारानवीक्षमाणः प्रमादजातोऽयं प्रयोग इति वेदं नाशयेत्। यथा प्रमत्तो राजा राज्यम्। तत्र लोके अदुहतेति प्रयोगो दुहेर्लङि साधुरस्ति। वेदे त्वस्मिन्नेवार्थे गन्धर्वाप्सरसो गामदुह्र इत्यादिकं प्रयोगमसाधुं वदेत्। अधीतव्याकरणस्तु दुहेर्लङादेशस्यात्मनेपदस्तस्यात्मनेपदेष्वनतः (पा० सू०-७।१।५) इत्यदादेशेऽदुहतेति सिद्धे लोपस्त आत्मनेपदेष्विति (पा० सू०—७।१।४१) तकारस्य लोपे कृतेऽवशिष्टस्याच्छब्दाकारस्य बहुलं छन्दसीति (पा० सू० ७।१।८ छन्दसि विषये शीङो रुट्, पा० सू० ७।१।६) इत्यतोऽनुवर्त्तमानी रुडागमो भवतीत्येवं रूपं साधयेत्। लोपागमयोरिदमेवोदाहरणम्। पक्षेऽदुहृतेत्यपि साधुपदं वेति। प्रकृते बहुलग्रहणात् क्वचिद्विकरणस्यापि रुडागमः अहश्रमस्य केतव इति। अत्र हशेर्लुङीरित्वादङ् (पा० सू० ३।१।५७) तस्यरूडागमःऋृहशो ङि गुणः (पा० सू० ७।४।१६) इत्येतदपि बहुलवचनान्न भवति। लुङ्लङ्लृङ्क्ष्वडुदात्तः (पा० सू० ६।४।७१) इति धातोरडागमः सर्वत्र। अदर्शमिति लोके साधु।

अथ वर्णविकारोदाहरणम्। उदि ग्रहः (पा० सू९ ३।३।३५) इति भावे घञ्युपधावृद्धौ चोद्ग्राह इति लोके साधुत्वेन प्रयुज्यते। वेदे तु उद्ग्राभं च निग्राभं च ब्रह्मदेवा अवीवृधन्नित्यपि दृश्यते। तत्र हृग्रहोर्भश्छन्दसीति (वा० ३।१।८४) वार्तिकेन हकारस्य भकारः। निग्राभे तु सूत्रेऽनुपात्तेऽपि निशब्दे उद्ग्राहनिग्राहौ लगुद्यमननिपातनयोरिति वार्तिकेन घञ्। एवं मध्याकर्तोर्विततं संजभारेत्यादयोऽपि छान्दसाः प्रयोगाः साधवो भवन्तीति दिक्।

एवमूहोऽपि प्रयोजनम्। यथा। यस्मिन् यागेऽङ्गजातं संपूर्णमुपदिष्टं सा प्रकृतिर्दर्शपौर्णमासादिः। यत्र यागविशेषे नोपदिष्टं सा विकृतिः। यथा सौर्यं चरुं निर्वपेद् ब्रह्मवर्चस्काम इति।

अस्यार्थः—सूर्यदेवताकेन चरुद्रव्यकेण यागेन ब्रह्मवर्चसं भावयेत्। अथास्य वैकृतस्य यागस्योपकारापेक्षायां 'प्रकृतिवद् विकृतिः कर्तव्या' इति वचनात् प्राकृतमङ्ग जातं प्राप्यते। तत्र यथा व्रीहीनवहन्तीत्यादाववघातस्य (फलं) वैतुष्यं तस्य विकृतावसंभवे निवृत्तिः। यथा कृष्णलेषु सुवर्णमाषेष्ववघातस्य (वैयर्थ्यम्) तुषाभावात्।

यस्य तूपकारः संभाव्यते तत्प्राप्यत एव। यथा चान्यत्प्रोक्षणाद्यङ्गजातं प्राप्यते। एवं मन्त्रोपि अग्नये त्वा जुष्टं निर्वपामि। अग्नये त्वा जुष्टं प्रोक्ष्यामीति प्रकृतौ तस्य चानुष्ठेयार्थप्रकाशनं कार्यम्, प्रकृतौ तत्र यस्य मन्त्रस्य साकल्येनाभिधेयं विकृतौ नास्ति तस्य सर्वस्यैव निवृत्तिः। यथा कृष्णलेष्ववघातमन्त्रस्य 'अव रक्षो दिवः सपन्नं वध्यासम्' इत्यस्य निवृत्तिः। यस्य त्वेकदेशस्याभिधेयं नास्ति तस्य तावन्मात्रं निवर्त्तते। यथा सौर्यादिषु अग्नये त्वा जुष्टं निर्वपामि' इत्येव देवताभिधाय्यग्निपदं निवर्त्तते। 'तत्र सूर्याय त्वा जुष्टं निर्वपामि' इति मन्त्र ऊहनीयः। न च सूर्यपदे प्रयुज्यमाने विभक्तेरलुप्तत्वादेकारस्यावस्थानप्रसंग इति वाच्यम्। अकारव्यतिरिक्तेष्वेव चतुर्थ्यन्तेषु शब्देषु ह्येकारस्य संप्रदानत्वमस्ति। अकारान्ते तु यशब्दवाच्यम्। एवं चेकारान्ते अग्निपदे निवर्त्तमाने विभक्त्येकारोऽपि निवर्त्तते। ततः सूर्ये कर्मणि देवतावाचिचतुर्थ्यन्तपदमूह्य सूर्यायेति। तथा च 'सूर्याय त्वा जुष्टं निर्वपामि' इति मन्त्रः पठनीय इति तात्पर्यार्थः।

एवं चान्येऽपि मन्त्रा न सर्वैर्लिङ्गैर्न सर्वाभिर्विभक्तिभिर्न सर्वैर्वचनैर्वेदे निगदितास्ते चावश्यं यज्ञगतेन विदुषाऽन्यस्मिन्द्रव्ये प्रयुज्यमाना यथायथं विपरिणमयितव्याः। यथा देवी रायः शुद्धस्थित्ययं मन्त्रो सुविनियुक्तस्तस्याज्ये ऊहः क्रियते। 'देवाज्यशुद्धमसि' इति। अत्र लिङ्गवचनयोरूहः कृतः। तथा पुरोडाशेऽवदानमन्त्रः पठ्यते। 'मा भैर्या संविकथा' इति। तस्य धानासूहः 'मा भैष्ट मा संविग्ध्वम्' इत्यादि। एवमाद्यूहो धर्मविकरणार्थस्थितिः सन् विना व्याकरणज्ञानं न सिध्यति। अथैतौ रक्षोहावागमलाघवासन्देहानामुपलक्षणम्। उक्तं च पस्पशाह्निके महाभाष्यकृता 'रक्षोहागमलध्वसंदेहाः प्रयोजनम्' इति। तत्र रक्षोहौ तावत् प्रदर्शितौ।

विनापि प्रयोजनमागमत्वादध्येयं ज्ञेयञ्च व्याकरणम्। एवं हि श्रूयते— 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति। शिक्षा कल्पो व्याकरणं निरुक्तोक्तं छन्दो ज्यौतिषञ्चेति षडङ्गानि। निष्कारणः प्रयोजनानपेक्षः। संध्योपासनादिवदवश्यं कर्त्तव्यं व्याकरणाध्ययनमित्युक्तं भवति। तत्र यथा सन्ध्यामनुपासीनः प्रत्यवेयादेवमनधीयानोऽपि व्याकरणम्। तथा ब्राह्मणेनावश्यं साधुशब्दा ज्ञेया इति। न चान्तरेण व्याकरणशास्त्रं लघुनोपायान्तरेण शक्याः शब्दाः विज्ञातुमिति।

ननु ते साधुशब्दा गुरुमुखात् प्रतिपदपाठेन शक्या विज्ञातुमिति चेन्न। एवं हि श्रूयते— बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नचान्तं जगाम। बृहस्पतिश्च वक्ता इन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकालः। न चान्तं जगाम। किं

पुनरध्यत्वे यः सर्वथा चिरं जीवति स वर्षशतं मानुषं जीवतीति। तत्र क्रियान्कालो बाल्ये गतः, भूयान्कालो वार्द्धके। वाल्योत्तरार्द्धं सम्पूर्णयौवनकालाववशिष्येते। तत्र गुरोः सकाशात् कियतां शब्दानां प्रतिपदपाठेनैव सर्वः कालो गतः। पुनर्विद्यान्तराणामध्ययनं खपुष्पतुल्यमेव। गृहस्थाश्रमकरणद्रव्यार्जनाद्युपायस्तु दत्तजलाञ्जलिरित्यतो लाघवाख्य एवोपायो ज्यायान्। स चोपायः प्रकृतिप्रत्ययादिविभागकल्पनापूर्वकेण सामान्यविशेषवतालक्षणेनैव ज्ञेयः।

तथा सन्देहनिरासोऽपि प्रयोजनं व्याकरणस्य। यथा—'स्थूलपृषतीमाग्निवारुणीमालभेत' इत्याम्नायते[1]। तत्र सन्देहः। किं स्थूला चासौ पृषती च स्थूलपृषतीति कर्मधारयसंज्ञकस्तत्पुरुषो वा, उत स्थूलानि पृषन्ति विन्दवो यस्यां सा स्थूलपृषतीति बहुव्रीहिरित्येवं सन्देहो वैयाकरणः स्वरेण निर्णयं विधत्ते। यथा—यद्यन्तोदात्तं पदं तदा तत्पुरुष एव। यदा पूर्वपदप्रकृतिस्वरत्वं तदा बहुव्रीहिरित्यत आलम्भनयोग्यद्रव्यनिर्णयो भवति। अथान्यान्यपि महाभाष्योक्तानि प्रयोजनानि प्रोच्यन्तेऽस्माभिः। यथा—

''चत्वारि शृंगा त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महादेवो मर्त्यां आविवेश[2]॥''

अस्यार्थः - नामाख्यातनिपातोपसर्गाश्चत्वारि[3] शृंगाणि। नामेति पूर्वाचार्याणां प्रातिपदिकस्य संज्ञा। आख्यातमिति तिङन्तं पदम्। त्रयो भूतभविष्यद्वर्त्तमानाख्यकालाः पादाः, द्वे शीर्षे द्वौ शब्दौ नित्यकार्यौ व्यंग्यव्यञ्जकौ वा नादस्फोटौ वा। सप्तविभक्तयः सप्तकारकाणि वा हस्ता। त्रिधा त्रिपु स्थानेषूरसि कण्ठे शीर्षे च बद्धो निष्पन्नः। वृषुसेचने वर्षतीति वृषभः। कामवर्षणात्। रोरवीति पुनः पुनः शब्दं करोति साधुशब्दान् बोधयतीत्यर्थः। एतादृशो महादेवः महान् देवः दीव्यति विलसति सल्लोके साधु शब्दो मर्त्यान् मरणधर्माणो मनुष्यानाविवेश। महता देवेन नःसाम्यं यथा स्यादित्यध्येयं व्याकरणम्। तथा बह्वृचमाध्यन्दिनानां शतपथे ब्राह्मणेऽप्युक्तम्।

[4]तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः, तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्द इति।

---

१. म० भ० पस्पशाह्निकम्। २. ऋग्वेदः।
३. नागेशोक्तं परा पश्यन्ती मध्यमा वैखरी इति चत्वारि पदजातानि भाष्यकैय्यटविरोधादुपेक्ष्यम्।
४. म० भा० पस्पश०।

अस्यार्थः—देवानामसुराणाञ्च स्वाराज्यार्थं संग्रामे जायमाने सति ते असुरा दैत्या देवा अतिसापत्नभावेन शत्रुत्वमुद्दिश्य हे अरय इतिप्लुतोच्चारणपूर्वकं वचने वक्तव्ये हेलयो हेलय इति द्विरुक्त्या वदन्ति स्म। तत्र हेलय इति पदं व्याकरणदुष्टम्। अत्र हि 'है हे प्रयोगे हैहयोः' ( पा० सू० ८।२।८५ )। है हे इत्येतयोः शब्दयोः प्रयोगे दूराद्धूते यद्वाक्यं वर्तते तत्र हैहयोरेव प्लुतो भवति। अत्र पुनर्हैहयोर्ग्रहणं अनन्त्ययोरपि प्लुतो यथा स्यादित्येत्रमर्थमित्यनेन सूत्रेण प्लुतो न विहितः। सति च प्लुते सन्धिर्न प्राप्नोति। प्लुतप्रगृह्या अचीति (पा० सू० ६।१।१२५) प्रकृतिभावविधानात्। किं चालाक्षणिकं रेफस्य लत्वं विहितम्। कल्पत इत्यादिवत्कृपेरभावात् कृपो रो लः ( पा० सू० ८।२।१८ ) इति लत्वस्यासंभव एव। तस्मात् कश्यप पुत्रा असुरा अतिवैयाकरणा एवं दुष्टं पदं प्रयुञ्जानाः पराबभूवुः। तस्माद् ब्राह्मणेन न म्लेच्छितवै न म्लेक्षितव्यम्। एतत्स्वयमेव स्पष्टयति नापभाषितवै नापभाषितव्यम्। कृत्यार्थे तवैकेन्केन्यत्वनः ( पा० सू० ३।४।१४ ) इति छान्दसस्तवै प्रत्ययः। यद्यस्मादेष म्लेक्षशब्दः म्लेक्ष अव्यक्ते शब्द इत्युक्तेरयं शब्दो असाधुः शब्दो भवति। हवै शब्दो निपातसमुदायो निश्चयार्थः।

अतएवोक्तम् –

रेफासंधिप्लुताभावात् हेलयो भाषिणोऽसुराः।
म्लेच्छनेन पराभूताः ज्ञेयं व्याकरणं ततः॥ इति।

अत्र दूरादाह्वानस्यैत्र विवक्षितत्वान्नित्यवीप्सयोः ( पासू ८।१।४ ) इति द्विरुक्तिर्न भवति, तद्विवक्षाया अभावात्। तस्मात्साधूनेव प्रयुञ्जीत्। नासाधूनिति स्मृतिकर्त्तार ऊचुः। फलं चास्य स्मर्यते—"एकः शब्दः सम्यक् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति, इति कात्यायनोक्तेः। अपशब्दं प्रयुंजानस्य प्रायश्चित्तमपि स्मर्यते। तथाच याज्ञिकाः पठन्ति। आहिताग्निरपशब्दं प्रयुंज्य प्रायश्चित्तीयां सारस्वतींमिष्टिं निर्वपेदिति। तस्मात्प्रायश्चित्तीया वयं मा भूमेप्यध्येयं व्याकरणम्। तच्चापशब्दत्वं द्विविधम्—शब्दकृतं स्वरकृतश्च। यदाह शिक्षाकारः—

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥

इति।

अस्यार्थः—तत्र वर्णकृतमपशब्दत्वं तावत् प्रतिपादितम्। स्वरकृतमपशब्दत्वं यथा—स्वरतः आद्यादित्वात्तसिः। एवं वर्णतो वर्णेन वा हीनो

मन्त्रः मिथ्याप्रयुक्तो यदर्थप्रत्यायनाय प्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषाख्यं प्रतिपादयन्नभिमतमर्थमाहेत्यर्थः। सोऽपशब्दरूपो वाग्वज्रो भूत्वा यजमानं हिनस्ति नाशयति। तत्र दृष्टान्तः। यथेन्द्रशत्रुशब्दः स्वरकृतादपराधादन्यायाद्यजमानं हिनस्ति स्मेत्यर्थः। कथं पूर्वमिन्द्रेण वृत्रासुरवधे कृते हतसूनुनात्वष्ट्रेन्द्रनाशार्थमाभिचारिकं यागं चिकीर्षता 'इन्द्रशत्रुर्वर्द्धस्व इति नूतनो मन्त्रः प्रयुक्तः। अत्र यद्यपि जन्त्वादयश्चे (उ० सू० ३ पा०) इत्युणादि सूत्रेण निपातिते सपत्नपर्यायि शत्रुशब्दे विवक्षिते सतींन्द्रशत्रुशब्दस्य इन्द्रस्य शत्रुरिद्रं शत्रुः, इन्द्रःशत्रुर्यस्येति द्वयोः समासयोस्तत्पुरुषवहुव्रीह्योः संभवतोरपि नाभिमतार्थ-सिद्धिः। कुतः। वृधुवृद्धौ छेदने चेति धात्वर्थ-द्वयोक्तेर्द्रव्यवृद्धौ शरीरवृद्धौ वा न किंचि दिन्द्रस्यानिष्टम्। छेदनार्थत्वे वा सर्वशत्रुसाधारण्येन छेदनेऽपि विशिष्येन्द्रस्यैव छेदनाप्रतिपादनान्नानिष्टम्। तथापि क्रियाशब्दोऽप्यत्र शत्रुशब्दः। क्रुन्कथम्। रूशातिभ्यां क्रुन् उ० सू० ५४३) इत्युणादिसूत्रेण शदेर्ण्यन्तात् क्रुन् प्रत्ययः। शातयति शात्यते वा शत्रुः। शदेरगतौ तः (पा० सू० ७।३।४२) इति णौ तकारः वहुलमन्यत्रापि संज्ञाछन्दसोरिति णेर्लुक्। 'न लुमतांङ्गस्य इति (पा० सू० १।१।६३) न णि-निमित्ता वृद्धिः। अत्र भविष्यदर्थे क्रुन् प्रत्ययो वहुलवचनात्। इन्द्रस्य शत्रुः शातयिता मारको भूत्वा वर्द्धस्वेति षष्ठीतत्पुरुष-समासेऽर्थो निष्पद्यते। वहुव्रीहौ त्विन्द्रः शातयिता मारको यस्येत्यर्थो भवति। तत्र यद्यपि रूपं तुल्यं अस्ति तथापि स्वरभेदोऽस्ति तत्पुरुषे तावत्समासस्येति (पा० सू० ६।१।२२३) समासान्तोदात्तत्वम्। वहुव्रीहौ तु वहुव्रीहौ प्रकृत्या पूर्वपदमिति (पा० सू०- ६।२।१) पूर्वपदप्रकृतिस्वरता भवति। एवं सति यजमानेनान्तोदात्ते इन्द्रशत्रुशब्दे प्रयोक्तव्ये प्रमादादाद्युदात्तः प्रयुक्तस्तत्र वहुव्रीह्यर्थोपसंहारादिन्द्र एवास्य घातकः समभूत्।

ननु कथमत्रान्तोदात्तस्याप्युदात्तस्य वा प्रसंगो यावता यज्ञकर्मण्यजपन्यूङ्खसामसु (पा० सू० १।३।३४) इत्येकश्रुत्या भाव्यम्। नैष दोषः। जपादिपर्युदासेन मन्त्राणामेकश्रुतिः संविधीयते। स्वेच्छया प्रयुज्यमानस्य वाक्यस्य मन्त्रत्वाभावात्। अनाम्नातेष्वमिति (जै० सूत्र ) जैमिनिवचनात्। अतएव महाभाष्यकारो मन्त्रो हीन इति पाठं परित्यज्य दुष्टः शब्द इति पाठं पपाठ। येषां मते ऊहितस्यापि वर्णसमुदायस्य मन्त्रत्वं तदा त्वेकश्रुत्यभावादेवात्र प्रत्यवायोऽभूत्। तस्मादपशब्दप्रयोगो यज्ञकर्मण्येव प्रत्यवायकारक इति याज्ञिकाः। यज्ञकर्मणोऽन्यत्र न प्रत्यवाय इति केचित्। अपरे त्वत्रापि काव्यादौ प्रत्यवायमिच्छति। नानृतात् पातकं परम्। नानृतं वदेदिति निषेधात्।

द्विविधं ह्यनृतं शब्दानृतमर्थानृतञ्चेति। तथाहि—शब्दस्य वार्थस्य वान्यथाप्रतिपत्तिहेतुरुच्चारणमनृतमिति तदत्र प्रतिषिध्यते। यथा ह्यर्थानृतं वदतः प्रत्यवायस्तथाशब्दानृतमपि। तस्मात् साधुभिरेव शब्दैःर्भाषितव्यं नासाधुभिरिति पाणिनेराशयो लक्ष्यते। स्मर्यते चेदं सकलं वृद्धैः।

यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः॥ इति।

कात्यायनप्रणीतेषु भ्रा[१]जाख्येषु श्लोकेषु मध्ये पठितोऽयं श्लोकः। तथा साधुष्वपि बाध्यबाधकभावराहित्ये सति सामान्यलक्षणाद्विशेषलक्षणान्वितस्य प्रयोगेण फलविशेषः स्मर्यते।

"नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः।"
अथ पत्काषिणो यान्ति येऽचीकमत भाषिणः॥

इति।

चङ्विधौ महाभाष्यकारेण पठितः श्लोकः। अस्यार्थः—कमेर्धातोर्लुङि परे च्लिविवक्षायाम् आयादय आर्धधातुके वा (पा० सू० ३।१।३१) इति णिङभावपक्षे च्लिः। कमेश्च्लेश्चङ्वाच्यः (पा० ३।१।३०) इति च्लेश्चङादेशः। ततश्चङीति (पा० सू० ६।१।११) द्विर्वचने कुहोश्चुः (पा० सू०-७।४।६२) इत्यभ्यासस्य चुत्वे अचकमत इति ये रूपं प्रयुंजते ते सुधियः सुयुक्तैः सम्यग्योजितैः वडवारथैरश्वासहितैरथैरिष्टसुखं मनोवाञ्छितसुखं नाकं स्वर्गं यान्ति। अथ ये पुनःच्लिविवक्षायां णिङं विधायं णिश्रिद्रुस्रुभ्यः कर्त्तरि चङिति (पा०सू० ३।१।४८) सामान्यलक्षणेन च्लेश्चङि कृते द्विर्वचनादि च कृत्वा णौ चङ्युपाधाया ह्रस्वः (पा० सू० ७।४।१) इति ह्रस्वत्वे सन्वल्लघुनि चङ्परेऽनग्लोपे (पा० सू० ६।४।५१) णिलोपे 'अचीकमत इति रूपं भाषितुं शीलं येषां ते भाषिणस्ते तु पत्काषिणः पादान् कषन्तो घर्षन्ते नाकं यान्ति। हिमकाषिहतिषु चेति (पा० सू० ६।३।५४) पादस्य पदादेशः। एवं साधुशब्दप्रयोगे महानभ्युदयो दृश्यते।

ननु किन्नाम साधुशब्दत्वं? उच्यते—

अनपभ्रष्टतानादिर्यद्वाभ्युदययोग्यता।
व्याक्रियाव्यञ्जनाया वा जातिः कार्या ह साधुता॥

---

१. अयं ग्रन्थो नोपलभ्यते।

अस्यार्थः—अपभ्रंशराहित्यं साधुत्वम् । यथा गोशब्दः कस्य साधुशब्दस्यापभ्रंश इत्यभियुक्तस्मरणाभावात् । गावी गोणीगोपोतलिकेत्येवमादीनामपभ्रंशशब्दानां गोशब्दो मूलमिति गोशब्दः साधुः । किंचापशब्दो हि प्रतिदेशं प्रतिगृहं प्रतिव्यक्ति प्रत्यवस्थं वा भिन्नोभिन्नः प्रयुज्यते । गौरिति शब्दस्तु स्वर्गमृत्युपातालनिवासिषु देवादिषु तादृश एव प्रत्युज्यते । अतएवानादित्वं साधुत्वमित्यपरे वदन्ति ।

इदानीन्तनैस्त्वेते गावीत्येवमादयः शब्दाः प्रमादालस्यादिना ह्यन्यथा प्रयुक्ता अपभ्रंशा[1] भवन्ति । गोशब्दस्तु वेदसमानकालीन इत्येवमन्येषामपि सुप्तिङन्तादीनां शब्दानां साधुत्वम् । अतएवोक्तमभियुक्तैः ।

अनिदं प्रथमाः शब्दाः साधवः परिकीर्तिताः ।
त एव शक्तिवैकल्यप्रमादालसतादिभिः ॥
अन्यथोच्चारिताः पुंभिरपशब्दा इतीरिताः ।
स्मारयन्तश्च ते साधून् अर्थधीहेतवः स्मृताः ॥ इति ।

अन्ये पुनः शब्दस्याभ्युदययोग्यतां साधुत्वमातिष्ठन्ते । यस्मिन् उच्चारिते विवा[2]हादिविलक्षणः कश्चित् सन्तोषविशेषो भवति । स च व्याकरणाध्यापनशीलैः शाब्दिकैरनुभवैकगम्य इत्यूचुः ।

अपरे पुनः शब्दत्वावान्तरजातिः साधुत्वमित्याहु । तच्च व्याकरणश्रवणपरिकिर्मीरिते चेतसि चकास्ति रत्नतत्त्वमिव परीक्षकाणाम् । अतएव व्याक्रियया व्याकरणेन व्यज्यते प्रकटीक्रियते । एवं विधा या काप्यनिर्वचनीया जातिः साधुतेति तत्त्वमिति ।

यद्येवं वैयाकरणैः स्वस्वशास्त्रे टिघुभादयः संज्ञाः क्रियन्ते । तासामनादित्वाभावात् कथं साधुत्वमिति चेत् सत्यम् ।

यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते टिघुभादयः ।
कथं तासां हि साधुत्वं नैव ताः साधवो मताः ॥
अनपभ्रंशरूपत्वान्नाप्यासामपशब्दता ।
हस्तचेष्टा यथा लोके तथा संकेतिता इमाः ॥

---

१. तदुक्तं वाक्यदीये-दैवीवाग्व्यवकीर्णेयमशक्तैरभिधातृभिः । (१–१५५)

२. विवाहे जाते यथा सन्तोषो जायते ततो विलक्षणः साधुत्वज्ञानलक्षणः । अतएवोक्तं 'पुत्रोत्सवं मन्यन्त' इति

ततश्च—

तासां प्रयोगेऽभ्युदयः प्रत्यवायोऽपि नो भवेत् ।
लाघवेनार्थबोधाय प्रयुज्यन्ते तु केवलम् ।।

इति शिष्टाः ।

ननु किमेषां शब्दानां साधुत्वप्रज्ञापने प्रयोजनम् । नच लौकिकव्यवहारनिष्पत्तिः स्यादिति वाच्यम् । असाधुशब्दैरपि तन्निष्पत्तेः । सत्यं; मा भूदन्यत् प्रयोजनं ज्ञानमेव प्रयोजनम् । एवं श्रूयते—'यो वा इमां वाचं पदशोऽक्षरशश्च वेद स आर्त्विजीनः स्यात्'इति ।। (म०भा. पस्पश) आर्त्विजीनो यजमानो याज्ञिकः । यज्ञर्त्विग्भ्यां घखञो (पा० सू० ५।१।७१) अत्यर्हतीत्यर्थे खञ् । खस्येनादेशः । ऋत्विजमर्हत्यार्त्विजीनः । ऋत्विगप्ययमुच्यते । तस्मिन् सूत्रे यज्ञर्त्विग्भ्यां तत्कर्मार्हतीति चोपसंख्यानमिति (वा० ४२१) वार्तिकेन खञ् । ऋत्विक्कर्मार्हतीत्यार्त्विजीनः । विद्वान् यजेत विद्वान् याजयेदिति द्वयोरपि विदुषोरधिकारात् । स्मर्यते चाभियुक्तैः—

यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् ।
तावुभौ पुण्यकर्माणौ पंक्तिपावनपावनौ ।।
शब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ।। इति ।

तदेवं साधूनां शब्दानां प्रकृतिप्रत्ययादिविभागेन ज्ञानमेव तावत्पुरुषार्थः । नच तत्रोपायान्तरं लघीयोऽस्ति अन्यदतो व्याकरणात् । आहुश्च—

इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ।।
(वा० का० १-१६)

रूपान्तरेण देवास्ते विचरन्ति महीतले ।
ये व्याकरणसंस्कारपवित्रितमुखा नराः ।। इति ।।

तस्मादध्येतव्यं व्याकरणमिति सिद्धान्तः ।

उपासनीयं यत्नेन शास्त्रं व्याकरणं महत् ।
प्रदीपभूतं सर्वासां विद्यानां यदवस्थितम् ।। इति ।।

तस्माद् व्याकरणमर्थविशेषं स्वामिन्नैश्वर्य इत्यादिक्रममाश्रित्यपदमन्वाचक्षणं पदपदार्थप्रतिपादनेन वेदस्योपकरोति । यस्य चैतन्नास्ति तस्य वेदाध्ययनं वेदाध्यापनञ्च निष्फलम् । सुकृतजनकत्वाभावात् । उक्तञ्च यास्केन—

यदधीतमविज्ञातं निगदेनैव शब्दचते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥ (निरुक्तं ९–१)

यद्वेदवाक्यमधीतमध्यापकात् पठितं तथा विज्ञातं प्रकृतिप्रत्ययादि-विभागपूर्वकेणार्थज्ञानेन रहितं निगदेन पाठरूपेण पुनः पुनरुच्चार्यते तत्कर्हिचित् कदाचिदपि न ज्वलति न स्वार्थं प्रकाशयति । तत्र दृष्टान्तः—अनग्नावग्निरहिते प्रदेशे क्षिप्तं शुष्कमेधः काष्ठं न ज्वलति न दीप्तिमद् भवति । भस्मानुकूलव्यापारवन्न भवति । आर्द्रकाष्ठं न ज्वलतीति किं वाच्यमित्यर्थः ।

अतोऽन्यदपि निन्दार्थवादं पुरस्कृत्य वेदज्ञानप्रशंसामाह यास्कः—

"स्थाणुरयं भारहारः किलाभूदधीत्यवेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा" ॥
( निरुक्त० १।२ )

यथाऽयं स्थाणुर्वृक्षः पुष्पफलपत्राणामात्मीयानां धारणमात्रेणैव संबध्यते । न तज्जैर्गंधरसस्पर्शोपभोगसुखैरेवं योवैदिको वेदमधीत्य गुरुमुखात् पठित्वा तद्गतमर्थमभिधेयं न जानाति स वैदिकः किलोत्प्रेक्षायां वेदभारवाहको ज्ञेयः । यथा पुस्तकभारवाहकः पशुः । पशुः पुस्तकस्यं अर्थं न जानाति ।

अथ व्याकरणाध्ययनद्वारा योऽर्थज्ञः ऋषिर्देवता छन्दोविनियोगपुरस्सरमर्थं वाच्यं जानाति स इह लोके सकलमनोवांछितं यद्यावच्च भद्रं कल्याणमश्नुते । किं च ज्ञानेन तात्त्विकवेदार्थज्ञानेन विधूतो निराकृतः स्वर्गसुखप्रतिबन्धरूपः पाप्मा पातकं येन स निःकल्मषो भूत्वा नाकं स्वर्गमेति प्राप्नोति । "अस्त्रीक्लीबं पुमान् पाप्मा पापकिल्विष कल्मषमित्यमरः ( अ० को० ) ।" इत्यास्तामतिप्रसक्तानुप्रसक्तः शिष्यबुद्धिक्लेशवृद्ध्यर्थो व्याकरणप्रयोजनग्रंथोपन्यासः ।

तस्मात्परंपरया परमपुरुषार्थसाधकत्वादारम्भणीयमिदं ह्यर्थशास्त्रमिति साधूक्तं रक्षोहनिमिषाविष्कृतकृतधर्मस्थितिर्जगतीत्यादि ॥ ९ ॥

अथ ग्रन्थकृद्रामचन्द्रः श्रीरामोपमया वर्णज्ञानस्याभ्युदयहेतुतां दर्शयन् सकलव्याकरणाशास्त्रोपयोगिनीं चतुर्दशसूत्रीमुपक्षिपन्नाशीर्वादव्याजेन वर्णोपदेशस्य प्रयोजनमाह —

**एकः परहितहेतोः कलिताकारोऽपि वर्जिताकारः ।**
**वर्णसमाम्नाय इह श्रीराम इवेष्टमर्पयतु ॥ १० ॥**

इह व्याकरणशास्त्रे वर्णसमाम्नायो अइउणित्येवमादिश्चतुर्दशसूत्रीरूपो युष्माकमिष्टमभिमतं प्रत्याहारसिद्धिरूपेण लाघवेन शास्त्रप्रवृत्तिरूपं फलमर्पयतु संपादयतात् । आशिषि लिङ्लोटौ) (पा० सू० ३।३।१७३ ) इत्याशीर्वादे लोट् । क इव श्रीराम इव । अत्र श्रीरामशब्द आवृत्योभयत्र संबध्यते । अत्रैको रूढोऽपरो यौगिकः । इह संसारे यथा रघुवंशराजमुकुटमणिः कौशल्याहृदयनन्दनो दशरथतनूजन्मा रावणादिशत्रुनिहन्ता श्रीरामः स्मर्तॄणां संसारिणामभिमतं पापनिरासपूर्वकभुक्तिमुक्तिरूपमिष्टफलं प्रयच्छति तथा वर्णसमाम्नायोऽपीष्टं फलं देयादित्यर्थः । तत्र सूचीकटाहन्यायेन श्रीरामपक्षे तावद्विशेषणानि योज्यन्ते ।

नन्विन्द्रादिदेवतानामपीष्टदातृत्वप्रसिद्धेः श्रीरामे को विशेष इत्यत आह—एक इति । [1]सजातीयविजातीयस्वगतभेदशून्य इत्यर्थः ।

एवञ्च तत्तदधिकारनिर्वाहाय कल्पितेन्द्रादिदेहधारिता तस्यैवेति कस्तदन्योऽभिमतं फलं दातुं समर्थ इति भावः । तथा च श्रुतिः—

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ससुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुरिति ॥

यद्वा एको मुख्यः "एके मुख्यान्यकेवला इत्यमरः । (अ० को०) इन्द्रादीनामपि नियन्तृत्वात् । यथा राज्ञ एव सर्वं द्रव्यमित्यमात्यसेवका अपि राजदत्तमेव गृह्णन्ति तथेन्द्रादिदीयमानमपि स रामदत्त इति भावः ।"

"लभते च ततः कामान् मयैव विहितान् हितान् ।" इति गीतोक्तेः ।

[2]नन्वस्मदादिवन्मनुष्यवेषस्य दाशरथिरामस्य कथमेकता स्यादित्यत आह—वर्जिताकारः । आकारः स्वरूपं तस्मान्निर्गतो निराकारः । सच्चिदानन्दरूप इत्यर्थः ।

ननुरामायणादौ वाल्ययौवनादि वयोऽवस्थावर्णनात् कथं निराकारत्वमतआह परहितहेतोरिति ।

परेषां शत्रूणां "परःश्रेष्ठारि "इति विश्वः । सकललोकोपद्रवकारकदुष्टरावणादि राक्षसमारणद्वारा भक्तानां विश्वामित्रादीनां हितं यज्ञविध्वंसनिराकरणरूपं तद्रूपाद्धेतोः मानुषवेषधारीत्यर्थः । उक्तञ्च भगवद्गीतायाम्—

---

१. एक इति शेषः ।
२. अस्मदादीति क पुस्तके पाठः ।

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत !
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ।। इति ।।

यद्वा परेषां विषयवासनावासितचित्तानां प्राणिनां श्रीराम इति नामस्मरणद्वारादुरितनिराकरणपूर्वकभुक्तिमुक्तिरूपस्य हितस्य प्राप्तिकारणादित्यर्थः ।

रामेति रामभद्रेति रामचन्द्रेति वा स्मरन् ।
नरो न लिप्यते पापैर्भुक्तिं मुक्तिञ्च विन्दति ।।
( रामरक्षास्तोत्रम् )

इति बुधकौशिकोक्तेः । कीदृशः श्रीरामः रमन्ते विलसन्ति यस्मिन् योगिनो नारदादय इति रामः परमात्मा धिया ब्रह्मविद्यया मोक्षलक्षणया वा प्राप्यो रामः । श्रीरामः शाकपार्थिवादेराकृतिगणत्वात् समासः ।

यद्वा मनोवाक्कायोपार्जिता स्वस्ववर्णाश्रमोचिता परमप्रेमलक्षणा भक्तिरेव श्रीस्तया ब्रह्मात्मैक्यज्ञानजननद्वारा प्राप्यः सुलभ इत्यर्थः ।

यद्वा लक्ष्मीरूपा सीता तया प्राप्यो रामो रमयति पित्रादीनानन्दयतीति रामः । अथवा श्रियं सीतां रमयतीति श्रीरामः । रमेर्ण्यन्तात् पचाद्यच् ।

अथ व्याकरणपक्षे कीदृशो वर्णसमाम्नायः एको मुख्यः व्याकरणशास्त्रोपयोगिसकलप्रत्याहारसिद्धिद्वारा मुख्यत्वमस्त्येत्यर्थः ।

ननु केनोपायेन वर्णसमाम्नायस्य शास्त्रप्रवृत्तौ लाघवसंपादकतेत्यत आह—पुनः कीदृशो परहितहेतोःकलिताकारः । अइउणित्यादिप्रत्याहारे प्रत्यायनरूपं यथा स्यादिति हेतोः कारणात् कलितोऽङ्गीकृतोऽइउणितिसूत्रादिस्थोऽकारो येन तादृशः ।

अयमर्थः—अजादिप्रत्याहारनिष्पत्त्यर्थं णकारादीनां चतुर्दशसूत्रीप्रान्तस्थानां हलां हलन्त्यम् ( पा० सू० १।३।३ ) इतीत्संज्ञायां सत्याम् आदिरन्त्येन सहेता ( पा० सू० १।१।७१ ) इतिवचनादकार आदिः[१] सन्नन्त्येन[१] णकारादिनेत्संज्ञकेन[२] गृह्यमाणः सन्नाद्यन्तशब्दो मध्यमापेक्षाविति न्यायाश्रयान्मध्यगानामिउ इत्येवमादीनां वर्णानां स्वस्य[३] चाकारस्य

---

१. आदिसदृशइत्यर्थः ।
२. अन्त्येत् सदृशेनेत्यर्थः ।
३. इता सदृशेनेत्यर्थः ।
४. स्व रूपं इत्यतः स्वमित्यनुवर्तते ।

ादिः प्रत्याहारो निष्पन्नः। तथा सत्यक् अच् अट्
वमादयः प्रत्याहारा स्युः। अत्र चाकारग्रहणमिकारा-
इतीकारादिभिरपीगादिप्रत्याहारसिद्धिः। एवं चेक् उक्
यः प्रत्याहाराः निष्पाद्यन्ते। पुनः कीदृशः वर्जिताकारः।
ष्पत्यर्थं वर्जितोऽकारो येन सः।

लण् इत्येवमादिनवसूत्रीप्रान्तस्थानां हलां हलन्त्यम् (पा०
त्संज्ञायां पूर्वोक्तयुक्त्या आदिर्यकार इत्संज्ञकेन णकारादिना
ध्यगानां वरलानां स्वस्य च यकारस्य ग्राहको भवतीति
सद्धिः। एवञ्च यम् यञ् भष् जश् छव् खय् झल् हल् एवमा-
ष्पाद्यन्ते। एतेषु प्रत्याहारेषु कुत्राप्यकारापेक्षा नास्तीति
विशेषणमुक्तम्। अथ च यः कलिताकारः स कथं वर्जिता-
ाभास[1]श्चेत्युभयपक्षेपि पूर्वोक्तरीत्यैव विरोधपरिहारो

प्रत्याहारनिष्पत्यर्थं णकारादीनामित्संज्ञा तावद् 'हलंत्यम्'
) इत्यनेन विधेया तत्र हल्प्रत्याहार एव तावदसिद्धः।
कारस्येत्संज्ञायाम् 'आदिरन्त्येनसहेता (पा० सू० १।१।७१)
हल् प्रत्याहारनिष्पत्तिः। सत्यां च तस्यां हलंत्यमिति
) हल्त्वेन तस्येत्वं प्राप्नोतीतीतरेतराश्रयदोषप्रसंगात्। नैष
को निर्देशः हल् हलन्त्यमिति। तत्रैकस्य सरूपत्वादेकशेषो
मो हल् षष्ठी तत्पुरुषः। हस्य ल हल्। चतुर्दशसंख्याक-
हकारस्य समीपवर्तीलकार इत्संज्ञको भवतीति प्रत्याहारमन-
देन लस्येत्वे संपादिते आदिरन्त्येनसहेता (पा० सू० १।१।७१)
सद्धे तमुपादाय द्वितीयेन हलंन्त्यमित्यनेन चतुर्दशसूत्री-
नामित्संज्ञाविधीयत इतीतरेतराश्रयदोषाभावः[2]। अपरे तु
रावर्त्तयन्ति। तत्र हलि अन्त्यं हलंत्यमित्येकः सप्तमीसमा-
ऽन्त्यस्य लस्येत्वमिति हल्प्रत्याहारसिद्धिमभिदधति। तदेत-
त शिष्टाः[3]। तस्मात् प्रत्याहारसम्पादकतयाऽक्षरसमाम्ना-
त्रप्रवृत्त्यर्थत्वं सिद्धम्।

---

सते विरोधोऽसौ इति हि विरोधाभासस्य लक्षणम्।
णि कार्याणि न प्रथन्ते' इति हि भाष्यम्।
मीप्यस्य षष्ठ्यार्थत्वाभावात् इदं व्याख्यानमनुचितमिति भावः।

अयमाशयः—असति वर्णोपदेशे प्रत्याहारा अणादयो न स्युस्तदभावे सन्निवेशविशेषापेक्षयोराद्यन्तयोरभावात् 'आदिरन्त्येन सहेता (पा०सू० १।१।७१) इत्यस्याप्रवृत्तावणादिसंज्ञानामभावः स्यात्। आदिरन्त्येन सहेतेत्यस्य तु सुप्तिङादिरवकाशः। तस्माद्यावतामकारादीनां कार्यमिष्टं तावन्तः अकः सवर्णे दीर्घः (पा० सू० ६।१।१०१) इत्यादौ स्वरूपेण पठितव्याः स्युस्तथा च गौरवं स्यात्। सति तु वर्णोपदेशे प्रत्याहारः, सति च तस्मिन्नादिरन्त्येन सहेता (पा० सू० १।१।१७१) इत्यस्य प्रवृत्तावकारादीनामगित्येवमादिकाः संज्ञाः संभवन्ति। एवञ्च ताभिः अकः सवर्णे दीर्घः (पा० सू० ६।१।१०१) इत्यादौ प्रत्याहारे लाघवं भवतीति। अत्र यद्यपि प्रत्याहारबहुत्वादेक इति विशेषणं न संभवति तथाप्यक्षरसमाम्नायस्यैव विशेषणं समुदायरूपत्वात्तस्येति दिक्।

ननु अकः सवर्णे दीर्घः (पा० सू० ६।१।१०१) इत्यादिकार्यसिध्यर्थमणादिप्रयाहारेण लाघवं यद्यपि सिध्यति तथापि क्वचित् किंचिदिष्टं न सिध्यति। कीदृक् तत्। यथा—

स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम्।

तेभ्योऽपि विवृतावेङौ ताभ्यामै चस्ततोपि च (पा० शिक्षा)

ह्रस्वो वर्णः संवृत इति शिक्षाकृद्वचनाद् भिन्नप्रयत्नयोरकाराकारयोःअणुदित्सवर्णस्य चाप्रत्ययः (पा० सू० १।१।६९) इति सवर्णशास्त्राप्रवर्त्तनात् दण्डाग्रम् दण्डाढकमित्यादिष्वान्तरतम्याभावाद्दीर्घस्याप्राप्तिः स्यात्। उच्यते—तेषामवर्णानामिह शास्त्रे सावर्ण्यप्रसिद्धयर्थमकारो विवृतः प्रतिज्ञायते इति वार्तिकोक्तेस्तथासतीष्टसिद्धिः।

ननु सत्यपि विवृतत्वेनैव प्लुतस्य दीर्घत्वं प्राप्नोति तस्मिन् कर्त्तव्ये प्लुतस्यासिद्धत्वात्। सत्यम्। सिद्धः प्लुतः स्वरसंधिष्विति ज्ञापकसूत्राद्वचनाद् दोषाभावः।

नन्वकारस्य यो विवृत्तोपदेश स आक्षरसमाम्नायिकस्य वा धातुप्रातिपदिकप्रत्ययनियातस्थस्य वेति। तत्र यद्याक्षरसमाम्नायिक एव विवृतः प्रतिज्ञायने ततो धातुप्रातिपदिकप्रत्ययनिपातस्थस्याकारस्य संवृतत्वादच्त्वं न स्यात्। एवञ्च शमामष्टानां दीर्घः श्यन् (पा० सू० ७।३।७०) इति दीर्घो न स्यादकारस्य किंत्वंशस्यैव स्यात्। दृषदित्यत्राकारोऽन्तोदात्तो न स्यात्। तथा नायक इति प्रत्ययाकाकारस्यानच्त्वादायादेशो न स्यात्। प्रपचतीत्यादौ 'निपाता आद्युदात्ता' इति प्रशब्दाकारस्याद्युदात्तो न स्य(त्। तथा 'अस्य च्वौ (पा० सू० ७।४।३३) इत्यादौ चोपात्तस्य संवृतत्वादनण्त्वादसति

ग्राहकत्वेऽकारस्यैव ग्रहणाच्छुक्ली भवतीत्यादावेवेत्वं स्यात्, मालीभवतीत्यादौ न स्यादिति ।

अथाक्षरसमाम्नायिकस्यैवाकारस्य विवृत्तत्वप्रतिज्ञाने किं प्रयोजनम् ? न ह्ययं पुनः कदापि प्रयुज्यते; उच्यते—यत्राकः सवर्णे दीर्घः (पा० सू० ६।१।१०१) इत्यादौ प्रत्याहारग्रहणं तत्र 'आदिरन्त्येन सहेता ( पा०सू० १।१।७१ ) इति वचनादनयोरेवाकारककारयोरनुकरणमिति तेन प्रत्याहारगतेनाकारेण विवृत्तेन प्रयोगस्थयोः दीर्घप्लुतयोः सावर्ण्याद् ग्रहणे सति मालाढकमित्यादौ दीर्घत्वादिकार्यं यथा स्यात् । असति हि विवृतत्वे 'अस्य च्वौ ( पा० सू० ७।४।३२ ) इत्यादिवत् प्रत्याहारेष्वपि संवृतस्यैव प्रयोगात् प्रयोगस्थह्रस्वस्यैवेत्वादिकार्यं स्यात् । सति तु विवृतत्वे दीर्घप्लुतयोरपि भवतीत्यस्त्येवाक्षरसमाम्नायिकमात्रस्यापि विवृतत्वप्रतिज्ञाने फलमत उभयानुग्रहाय यो नाम कश्चिदकारः स सर्वो विवृतः प्रतिज्ञायते इति सिद्धान्तः ।

यद्येवमकारस्य विवृत्तोपदेशः क्रियते तर्हि लोके तस्यैव प्रयोगः प्राप्नोति न संवृतस्येति चेत् सत्यम् । यतस्तस्य संवृतस्य प्रयोगार्थमष्टाध्याय्यन्ते अ अ इति ( पा० सू० ८।४।६८ ) प्रतिपत्तिः करिष्यते । सूत्रार्थस्तु—प्रथमोऽकार इह शास्त्रे दीर्घप्लुतयोरुदात्तादिभेदसहितयोरप्यवर्णयोः सावर्ण्यप्रसिद्धयर्थं विवृतः प्रतिज्ञायते । द्वितीयस्त्वकारः कृतविवृतत्वस्याकारस्य प्रयोगो माभूदिति पुनः स संवृतः क्रियते । इयमेव प्रत्यापत्तिः । **स्वरूपाद्धि प्रच्युतस्य तस्य पुनस्तत्पदप्राप्तिः प्रत्यापत्तिः ।**

ननु चातिमाल इत्यादौ विवृतस्याकारस्य 'गोस्त्रियोरुपसर्जनस्य' (पा० सू० १।२।४८) इति ह्रस्वो विधीयमान आन्तरतम्याद्विवृतस्य विवृत्तोभवेत्तस्य प्रयोगो भा भूत् किन्तु संवृतो यथा स्यादिति प्रत्यापत्तिवचनमर्थवद् भवति न ज्ञापकम् । मैवं वोचः ह्रस्वप्रदेशेषु अचश्च ( पा० सू० १।२।२८ ) इत्युपस्थानादचो ह्रस्वेन भाव्यमसति च विवृतत्वे अकार आकारं न गृह्णातीत्याकारस्य ह्रस्वो नैव स्यादिति कस्य प्रत्यापत्तिः स्यात् । यत्र तर्हि उदीचामातः स्थाने यकपूर्वायाः ( पा० सू० ७।३।४६ ) इति ज्ञापकादाकारस्य ह्रस्वप्राप्तिसंभावत्तेन क्षत्रियका, चटककेत्यादौ यकौ पूर्वो यस्या आतः स्त्रिया आकारस्य स्थाने योऽकारः केणः ( पा० सू० ७।४।१३ ) इति ह्रस्वे सति जातस्तस्य प्रत्ययस्थात् कात्० ( पा० सू० ७।३।४४ ) इत्यकारस्य प्राप्तमित्वं विकल्पेन निषिध्यते । यदि चाकारस्य ह्रस्वो न स्यात् तदा तदारंभणमनर्थकं स्यादिति तज्ज्ञापकमेव । किं च बहुमालक इत्यादौ कपि परे आपोऽन्यतरस्याम् ( पा० सू० ७।४।१५ ) इत्याबन्तस्यांगस्य विकल्पेन ह्रस्व-

विधानादचपरिभाषानुपस्थानस्थलेऽपि प्रत्यापत्तिवचनसार्थक्यसंभव इति चेत् ।

उच्यते—लोके प्रयुक्तानामनुशासनात्प्रयोगे क्वचिदप्यकारस्य विवृतस्याभावात्संवृत एव;भविष्यतीति व्यर्था प्रत्यापत्तिर्ज्ञापिकैवेति सिद्धम् । तस्माद्विवृतस्याकारस्याष्टाध्यायीस्थानि सकलानि कार्याणि निर्वर्त्य प्रयोगावस्थायामकारः संवृतः पठनीयोऽत एव शास्त्रान्ते प्रत्याप्रत्तिः कृता पाणिनिना । पुनः कीदृशः श्रीरामः प्रत्याहाररूपलाघवाख्या श्रीः शोभा तया रमयति सन्तोषयति वैयाकरणानिति श्रीरामः । अर्धमात्रालाघवेन वैयाकरणाः पुत्रोत्सवं मन्यन्त इति शिष्टोक्तेर्यत्रैवंविधस्य प्रत्याहाररूपलाघवस्य सकलव्याकरणशास्त्रोपकारकस्य दर्शनान् महान् सन्तोषो भवतीति किमाश्चर्यमिति भावः । इत्यास्तां ग्रन्थपल्लवनेन ।

**एवं महाभाष्यविदामपाठि गोविन्दधीरेण गुरुप्रसादात् ।**
**प्रयोजनं सम्यगिहाल्पमुक्तं शब्दस्मृतेः शब्दविपां हितार्थम् ॥१०॥**

इति शिवम् ॥

**ज्योतिर्विद्वरनीलकण्ठविदुषः श्रीचन्द्रिकायास्तथा,**
**पुत्रेणाह्निगवीप्रसारितधिया गोविन्दनाम्ना कृते ।**
**श्रीसभ्याभरणस्य सुज्ञसुखदेऽल्पे रश्मिमालाभिधे,**
**व्याख्याने शशिभृत्पुरीवसतिनोल्लासोऽयमाद्योऽगमत् ॥ १ ॥**

इति श्रीमद्विद्वद्दैवज्ञमुकुटहीर नीलकण्ठज्योतिर्वित्सूनुगोविन्दज्योतिर्विद्विरचितायां सभ्याभरणटीकायां रश्मिमालाभिधायां प्रयोजनकथननामकः प्रथम उल्लासः ।

# अथ द्वितीय उल्लासः

अथ साधूनार्यया नमते—

**य उदात्तगुणगरिष्ठाः क्षेपिष्ठाः प्रत्ययोपदेशेषु ।**
**आयन्नादिसमांस्तान् साधून् वन्दामहे सततम् ।। १ ।।**

वयं तान् साधून् सुशीलान् सततं निरन्तरं वन्दामहे नमस्कुर्मः । कीदृशान्, आयन्नादिभिः आयनेयीनीयिय एभिः प्रत्ययैः समांस्तुल्यान् । तान् कान् ये साधनैः उदात्तैः परलोकसाधनीभूतैः शमदमादिभिर्गुणैः गरिष्ठाः अत्यन्तं गुरुवः श्रेष्ठाः । ते च गुणाः भगवद्गीतायामुक्ताः ।

"अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ।।"
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ।।
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति सम्पदं दैवीमभिजातस्य भारत ।।" इति ।

एषां लक्षणानि ग्रन्थे[1]भ्योऽवसेयानि ।

उदात्तगुणाश्च ते गरिष्ठाश्चेति वा समासः । तथा 'प्रत्ययो ज्ञानं' प्रत्ययोऽधीनसपथज्ञानविश्वासहेतुष्वित्यमरः (अ० को० ३।३।१४७) । तच्च ज्ञानं भगवद्गीतायामुक्तम्—

अमानित्वमदंभित्वमहिंसाक्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ।।
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ।।
असक्तिरनभिष्वङ्गः पुत्रदारधनादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ।।

---

१. गीताभाष्येभ्य इत्यर्थः ।

मयि चानन्यभावेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥
अध्यात्मज्ञाननित्यत्वतत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं वदतोऽन्यथा ॥ इति ॥

यद्वा 'को ददर्श प्रथमजायमानम्' इत्यादि श्रुतिसमधिगतदेहात्मभेदज्ञानं प्रत्ययस्तदुपदेशे क्षेपिष्ठाः अतिशयेन क्षिप्ताः । अज्ञानदावानलपतितानां प्राणिनां कामपि दीनतामवलोकयितुमसमर्थाः । आग्रहिलानां तेषामज्ञाननाशपूर्वकज्ञानोत्पादने ह्यतिसमर्था इत्यर्थः । किन्तु 'तरति शोकं तरति पाप्मानम्' इत्यादि श्रुतेः ।

अनात्मभूते देहादावात्मबुद्धिस्तु देहिनाम् ।
साऽविद्या तत् कृतो बन्धस्तन्नाशो मोक्ष उच्यते ॥

इत्यादिवचनैश्च तदपायोपायाऽऽत्मतत्त्वज्ञानं तद्विषयिण्यनुग्रहदृशा सत्वरमेव । तान् पवित्रयन्त इत्यर्थः । आयन्नादयस्तु कीदृशाः । आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ( पा० सू० ७।१।२ ) प्रत्ययादिभूतानां फढखछघां एषां क्रमेण आयन् एय् ईन् ईय् इय् एते आदेशाः भवन्ति । नाडायनः । नादेयः । कुलीनः । भवदीयः । अग्रियः ।

नचैते आयन्नादयः स्थानिवद्भावेन प्रत्ययाद्युदात्तरूपो गुणो येषां ते उदात्तगुणा अतएव गरिष्ठाः । आ, ए, ई, ई, एवमेते आकारादयो दीर्घञ्च ( पा० सू० १।४।१२ ) इति गुरुसंज्ञकाः ।

अत उदात्तगुणाश्च ते गरिष्ठाश्चेति समासः संयोगप्रयुक्तं गुरुत्वं लघवोऽपि धनप्रयुक्तमिव लभन्ते । एषां तु स्वत एव गुरुत्वमिति प्रकर्षप्रत्ययः । तथा फढखछघानामुपदेशसमय एवायन्नादिषूपदेशिवद्वचनं स्वरसिद्धयर्थमिति वार्तिकेनायन्नादीनां विधानातिदेशादतिशयेन क्षिप्ताः क्षेपिष्ठाः ।

अयमर्थः—नाडायन इत्यादिषु 'नडादिभ्यः फक् (पा० सू० ४।१।९९) इति फगादिप्रत्ययाकारस्याद्युदात्तश्चेत्युदात्तत्वे जाते पश्चाज्जायमानाः केवलफकारादीनां आयन्नादयोऽन्तोदात्ताः स्युरन्येषां त्वचाम् अनुदात्तं पदमेकवर्जम् ( पा० सू० ६।१।१५८ ) इत्यनुदात्तत्वं स्यादतो वार्तिकेन फकारादिप्रत्ययोपदेशकाल एव क्रियतेऽतः प्रत्ययत्वेनाद्युदात्ता एवैते भवन्ति । ततः शेषनिघातः । वार्तिकप्रत्याख्यानपक्षे घच् छौ चेति ( पा० सू० ४।४।११७ ) ज्ञापकमाश्रयणीयम् । तच्च चित्त्वं चित् ( पा० सू० ६।१।१६३ ) इत्यन्तो-

दात्तार्थं क्रियते। यहि हि प्रत्ययस्वरे कृते आयन्नादय आदेशाः स्युस्ततः फशब्दाकारस्योदात्तत्वे कृते हलः स्रंसनधर्मिणः स्रंसनधर्मिण्यनुदात्ते आदेशे कृतेऽन्तोदात्तं पदं सिद्धमिति चित्करणमनर्थकं स्यात्। कृतं त्वेतत्प्रत्ययोपदेश-काल एव आयन्नादयो भवन्तीति ज्ञापयतीति सिद्धान्तः।

अथ पुनः साधुं शिखरिण्या नमति—

**विभाषा साकाङ्क्षे लृट इव न यस्य क्वचिदपि**
**क्वचिच्चावज्ञानं परिभुव इवोदेति न यतः॥**
**निषेवेन्निन्दादीन्नच वुञिव यस्तं प्रणमता-**
**वदातं सच्छब्दप्रथितमुदितं शानचमिव॥ २॥**

भो बुधास्तं साधुं प्रणमतेत्यन्वयः। तं कम्। यस्य साधोः क्वचिदपि यस्मिन् कस्मिंश्चिदपि प्राप्त्याशया साकांक्षेऽर्थिनि विभाषा विरुद्धा भाषा वाणी नास्ति। 'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती' त्यमरः। (अ० को० १।६।१) तत्रान्वयदृष्टान्तः। लृट इव यथा विभाषा साकांक्षे (पा० सू० ३।२।११४) अभिज्ञावचने स्मरणार्थके शब्दे उपपदे यच्छब्द-सहिते केवले वा सति विभाषा विकल्पेन लृट स्यात् साकांक्षे धात्वर्थे। अभिजानासि कृष्ण यन् मथुरायां वत्स्यामस्तत्रौदनं भोक्ष्यामहे। अत्र साकांक्षे लृटो विभाषा भवति। नैवं साधोः। तथा क्वचिच्च नीचेप्यवज्ञानम-सत्कारो यतः साधोर्नोदेति। सर्वानप्यात्मैवेदं सर्वमिति धिया सत्करोति। अत्राप्यन्वयदृष्टान्तः परिभुव इव यथा परौ भुवोऽवज्ञाने (पा० सू० ३।३।५५) परिशब्दे उपपदे अवज्ञानार्थे भुवो विभाषा घञ् भवति। परिभावः। पक्षे परिभवः। ऋदोरप् (पा० सू० ३।२।१४६) पञ्चम्यर्थे प्रथमा। निन्दादिभ्यो-धातुभ्यः तच्छीलादिष्वर्थेषु वुञ् स्यादिति सूत्रविहितो वुञ् निन्दादीन् निषेवते निन्दक इत्यादीन्युदाहरणानि इत्यन्वयदृष्टान्तः।

ननु साधुं कीदृशं तम्। अवदातं वाङ्मनःकायशुद्धम्। नहि ज्ञानेन सदृशं पवित्रमिह विद्यते (गीता० ४।३८) इति देहात्मनो भेदज्ञानेन पवित्रमिति वा। तथा सच्छब्देन प्रथितं साधुत्वेन व्याख्यातम्। देशकालोचितं वचः सच्छब्दस्तेन विदितमिति वा। तथोदितं दिने दिने वर्धिष्णुम्। अत्र दृष्टान्तः। उदितं पाणिनिना लटः शतृशानचावित्यादि सूत्रेणोक्तं तौ सत् (पा० सू० ३।२।१२७) इति सत् संज्ञया विहितं अर्थविशेषाद्युपाध्यसंग्रहा-र्थत्वेनावदातं विशुद्धं शानचं शानजाख्यं प्रत्ययमिव साधुं नमते इत्यर्थः। 'ब्राह्मणस्य कुर्वन्, ब्राह्मणस्य कुर्वाणः ब्राह्मणस्य यक्ष्यमाण' इत्येतेषु 'पूरण-

गुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन' (पा० सू० २।२।११) इति सत्संज्ञायोगे षष्ठीसमासनिषेधो भवति।

ननु शतृशानचोर्लादेशत्वान्‘ न लोकाव्ययनिष्ठाखलर्थतृनाम् (पा० सू०-२।३।६९) इति षष्ठ्येव नास्ति कुतः षष्ठीसमासः, कुतस्तरां षष्ठीसमास-निषेधः। सत्यं द्विविधा षष्ठ्युच्यते—‘षष्ठी शेषे (पा० सू० २।३।५०) इत्येका,, कर्तृकर्मणोः कृति (पा० सू० ३।२।६५) इति द्वितीया। शतृ-शानचोः कृत्वात् कृद्योगलक्षणाया एव षष्ठ्याः प्रतिषेधो, नतु शेषषष्ठ्याः इत्यतः समासे प्राप्ते निषेधः सार्थक एव ॥ ४॥

अथ साधुस्तुतिमार्ययाह—

त्यक्तोपाधिविकारा सततं दधती परेष्वपि प्रणयम्।
भवति न कस्य नमस्यः प्रत्ययसंज्ञेव यस्य धीः स सुधीः॥

स सुधीः पण्डितः कस्य नमस्यो न भवति, अपि तु सर्वस्य देवदत्ता-देर्नमस्यो भवति। स कः यस्य धीर्बुद्धिरेतादृशी विभातीत्यध्याहारः। कीदृशी धीः। लोकख्यापनाय धर्मादर, उपाधिः, विकाराः कामादयः त्यक्ताः उपाधि-विकारा यया सा उपाधिर्विषयसन्निधिस्तस्मिन् सति ये विकारा इति वार्थः। तथा परेषु शत्रुषु अपि शब्दात् मित्रोदासीनेषु प्रणयं प्रीतिं दधती अङ्गी-कुर्वन्ती। केव प्रत्ययसंज्ञेव। कीदृशी त्यक्तोपाधिविकारा। त्यक्ता उपाधि-विकारौ यया सा। उपाधिरर्थविशेषः। विकार आदेशादिः। उपलक्षणमेतत्। प्रकृत्युपपदोपाधिविकारागमान् वर्जयित्वा प्रत्ययसंज्ञा भवतीत्यर्थः। गुप्ति-ज्किद्भ्यः सन् (पा० सू० ३।१।५) इत्यादौ प्रकृतेः। स्तम्बकर्णयोरमि-जपोः (पा० सू० ३।२।१३) इत्यादावुपपदस्य। ‘हरतेर्दृतिनाथयोः’ पशौ (पा० सू० ३।२।२५) इत्यादावुपाधेः, हनस्त च (पा० सू० ३।१।१०८) इत्यादौ विकारस्यः, त्रपुजतुनोःषुक् (पा० सू० ४।३।१३८) इत्यादावागमस्य च प्रत्ययसंज्ञा न भवतीत्यर्थः।

अयमर्थः—प्रतिसूत्रमनुवृत्तेन ‘प्रत्ययः (पा० सू० ३।१।१) इत्यधि-कारेण सर्वेषां प्रकृत्युपपदोपाधिविकारागमानामपि प्रत्ययसंज्ञा प्राप्नोति। किञ्च स्यात् परत्वमाद्युदात्तत्वमङ्गसंज्ञा चेत्येते विधयः स्युः। यथा सत्यां संज्ञायां प्रकृतिप्रत्यययोः परस्परापेक्षं परत्वं स्यात्। शब्दान्तरापेक्षं वा प्रकृतेः। एवमुपपदस्यापि परत्वादुपसर्जनं पूर्वमित्येतद् राजपुरुषादिषु सावकाशं बाधित्वा परत्वं स्यात्। यत्र च समासाभावादुपसर्जनं पूर्वमित्यस्याप्रसङ्गस्त-त्रोपपदस्य परत्वं स्यात्। एवं च सति भोक्तुं व्रजतीत्येवमेव नित्यं स्यात्। नतु

व्रजति भोक्तुमिति। उपाधिरप्यर्थस्य परत्वासंभवेपि तद्भाविनः प्रयोगानियमे प्राप्ते परश्च (पा० सू० ३।१।१) इति नियमः स्यात्। आद्युदात्तत्वं च यथायथं स्वरान्तरं बाधित्वा स्यात्। अङ्गसंज्ञा तु नैव प्राप्नोति। सा तु विधानप्रतिबद्धा। नचेह प्रकृत्यादयः कुतश्चिद्विधीयन्ते इति न सा प्रकृत्यादिषु परतः पूर्वस्य प्राप्नोति।

ननु प्रत्यय इति प्रतियोगमुपस्थानेपि वाक्यभेदप्रसङ्गात् प्रकृत्यादीनां संज्ञा न भविष्यति। तथाहि गुप्तिज्किद्भ्यः सन् (पा० सू० ३।१।५) प्रत्ययो भवतीत्येकवाक्यम्। ते च गुबादयः प्रत्ययसंज्ञा इति द्वितीयं वाक्यम्। संभवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यत इति। मैवं वोचः। सन्नादीनामसतां प्रत्ययसंज्ञानुपपत्तेर्वाक्यभेदेनैव संज्ञाः विधेयाः। तत्रैकेन वाक्येन सनादीनां विधिरपरेण तु संज्ञाकरणम्। एवञ्च प्रकृत्यादीनामपि प्राप्नोति। एवं सति कथमेतदुक्तं त्यक्तोपाधिविकारेति विशेषणमिति।

अयमत्राभिप्रायः—प्रकृत्यादीनां सनाद्युत्पत्तौ निमित्तत्वेनोपादानात् पारार्थ्यात् स्वसंस्कारं प्रतिप्रयोजकत्वाभावः। यथा बहुषु गच्छत्सु को देवदत्त इति पृष्टे उत्तरदाता यः पीठे स देवदत्त इत्याचष्टे। तत्र पीठस्य देवदत्त इति संज्ञा न भवति। किञ्च योग्यविभक्त्यभावाच्च न प्रकृत्यादीनां संज्ञा, यतः प्रथमान्तस्य षष्ठ्यन्तस्य वा संज्ञासंबन्धो दृश्यते। यथा वृद्धिरादैच् (पा० सू० १।१।१)। स्वं रूपं शब्दस्येति (पा० सू० १।१।६८)। नच प्रस्तुते तथास्ति।

अन्यच्च—प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः (परि० १०७) इति न्यायाद्विहितानां सनादीनामेव प्राधान्येन संज्ञा भवितुमर्हति न तु प्रकृत्यादीनाम्। यद्येवं तर्हि पूर्वोक्तन्यायेन विकारागमानामपि प्राप्नोति। सत्यम्। 'प्रत्यय' इति महतीसंज्ञाक्रियतेऽन्वर्था। यथा विज्ञायेत 'प्रतिजानन्त्यनेनार्थमिति'। नच लोका विकारागमाभ्यामर्थं प्रतियन्ति। अथवा प्रयोजनाभावान्न भविष्यति। तथाहि तेषां षष्ठ्या स्थानसम्बन्धस्यावयवसम्बन्धस्य च प्रतिपादनात्, परत्वं तावन्न सम्भवति। आगमानां चानुदात्तत्वविधानादाद्युदात्तत्वस्याप्यसंभवः। तस्मात् सिद्धमेतत्। प्रकृत्युपपदोपाधिविकारागमानां प्रत्ययसंज्ञा नास्तीति। सुष्ठूक्तं त्यक्तोपाधिविकारेति।

पुनः कीदृशी। गुप्तिज्किद्भ्य (पा० सू० ३।१।५) इत्यदौ दिग्योगलक्षणायाः पञ्चम्या निर्वाहाय पूर्वः पर इति वा शब्देऽध्याहर्त्तव्ये परश्चेति वचनाद्यः प्रत्ययः स पर एवेति परिभाषाबलात् सनादीनां परेषु प्रकृतेरनन्तरभाविषूत्तरप्रदेशेषु सततं निरन्तरं बहुधा प्रणयं प्रीतिं दधती अपिशब्दात् क्वचित् प्रकृतेः पूर्वं मध्ये वा प्रणयं दधती। यथा विभाषा सुपो बहुच्पुरस्तात्तु

( पा० सू० ५।३।६८ ) अव्ययसर्वनाम्नामकच् प्राक्टेः ( पा० सू० ५३७१ ) इति विशेषवचनबलात् । कुत्सितं तृणं बहुतृणम् । 'अज्ञातः सर्वः सर्वकः' इति । चितः ( पा० सू० ६।१।१६३ ) इत्यन्तोदात्तस्त्वनयोः प्रत्यययोर्नैव । यतश्चितः स प्रकृतेर्बहुजकजर्थमिति भाष्योक्तेः । प्रकृतिप्रत्ययसमुदायस्यात उदात्तो भवतीत्यन्तोदात्तमेव पदमिति सिद्धान्तः । अत्र [1]**बृहट्टीकायां** प्रसक्तानुप्रसक्त्या बहुलिखितमिति तत्रत एवावधार्यम् ॥ ५ ॥

अथान्यां साधुस्तुतिमार्ययाह--

**सततपरेष्टाशंसानिरतो विरतो विरोधः शक्तौ ।**
**तातङ्समानधर्मा सुजनो जायेत कस्य नो नम्यः ॥ ६ ॥**

सुजनः साधुः कस्य नम्यो नन्तुं नमस्कर्त्तुं योग्यो नम्यः अचो यत् ( पा० सू० ३।१।९१ ) इत्यनुवर्ती पोरदुपधात् ( पा० सू० ३।१।९८ ) इत्यर्हार्थे यत् । न जायेतापि तु सर्वस्यापि मित्रोदासीनशत्र्वादेर्नम्यः स्यात् । कीदृशः । तातङ्ग समानस्तुल्यो धर्मो यस्य धर्मादनिच् केवलात् ( पा० सू०-५।४।१२४ ) इति बहुव्रीहावनिच् समासान्तः । सुजनपक्षे तावत्—सततमनवरतं परस्येष्टाशंसा शुभवाञ्छा तत्र निरतः । कदाचिदपि परानिष्टाशंसी नेत्यर्थः । तथा चोक्तं --

"उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ इति ॥

अथ तातङ् कीदृशः । सर्वदा परस्य स्वस्माद्भिन्नस्येष्टाशंसायामाशीर्वादरूपेऽभिलाषे निरतः । 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् ( पा० सू०-७।१।३५ ) इति वचनवलाद् विहितः । परस्य शुभाशंसनमेवात्राशीः । पुनः कीदृशः । विरोधत इति । उश्च इश्च वी तयो रोधो विरोधस्तस्मिन् तुहिगतोकारेकारयोर्निराकरणेः सप्तम्यर्थे तसिः । ङित्वरूपायां शक्तौ सत्यामपि सर्वादेशो भवंस्ततो विरोधाद् विरतो निवृत्तो भवतीत्युभयोरपि शब्दतः साधर्म्यम् ।

ननु तातङ् सर्वादेश इति कथं निःशंकमुच्यते, यतो ङित्करणाभावेप्यनेकालत्वात्सर्वादेशसिद्धौ सत्यां ङित्करणसामर्थ्यादन्त्यादेश एव तातङ् भवितुमर्हति । सत्यम् । यदि पाणिनेस्तातङन्तादेशोऽभिमतः स्यात्तदा एरुः ( पा० सू० ३।४।८६ ) इत्यस्यानन्तरं तिह्योस्तादाशिषि वेति ब्रूयात् । अत्र

---

१. ग्रन्थकारेण स्वयं रचितायामिति शेषः ।

हि एरित्यनुवर्त्तते। तेनायमर्थः तिह्योरेरिवर्णस्य ताङ्भवत्याशिषि वेत्यन्तादेशे सिद्धे यत्प्रकरणान्तरे तातङ्विधत्ते तज्ज्ञापयत्याचार्यः सर्वादेशस्तातङ् भवतीति।

यद्येवं ङित्वं तर्हि किमर्थमुच्यते। ब्रूतात् मृष्टादित्यादौ सर्वादेशे तातङि गुणवृद्धी प्राप्नुतस्ते ङित्वान्न भवतः। किं च ङित्वाच्चास्य स्थानिवद्भावाद्यत् पित्वं प्राप्नोति तदपि निवर्त्तते। ङिच्च पिन्न भवतीति वचनात्। एतच्च सार्वधातुकमपित् ( पा० सू० १।२।१४ ) इत्यत्रोक्तम्। तेन ब्रूताद् भवान् इत्यत्र ब्रुव ईट् ( पा० सू० ७।३।९३ ) इति हलि पिति विधीयमानईडागमो न भवति। यथा ब्रवीतीत्यत्र भवतीट्।

नन्ववयवे कृतं लिंगमिति न्यायेन ङित्वमन्त्यविध्यर्थमस्तु गुणवृद्धिप्रतिषेधार्थमप्यस्तु को विरोध इति चेत्सत्यम्। हुझल्भ्यो हेर्धिः ( पा० सू० ६।४।१०१ ) इत्यतो हेरधिकारे सति अतो हेः ( पा० सू० ६।४।१०३ ) इत्यत्र पुनर्हेरित्यस्याधिकारः कृतस्तस्य हीदमेव प्रयोजनं हिरेव यो हिस्तस्य लोपो यथा स्यात्, स्थानिवद्भावेन यो हिस्तस्य लोपो माभूत्। तच्च सर्वादेशत्वं विना नोपपद्यते। तेन जीवतात् त्वमित्यादौ तातङो लोपो न भवति। किं च ङित्वसामर्थ्यात् किलायमन्त्यविधिः स्यात् तच्च सामर्थ्यं नास्ति सर्वादेशत्वेपि प्रयोजनसंभवात्तेन च कियद् विलम्बसंभवे सत्युत्सर्गापवादयोस्तुल्यकालाप्रवृत्तिरिति अपवादमपि ङिच्च ( पा० सू० १।१।१३ ) इत्यतद् बाधित्वा परत्वात् सर्वादेशस्तातङ् भवति। अनङ् सौ ( पा० सू० ७।१।९३ ) इत्यनङादीनां तु ङित्वमनन्यार्थं सदन्त्यविकारार्थमेव भवतीत्यलं बहुना ॥ ६ ॥

इत आरभ्य साधोरामन्त्रितस्येवेत्येतत्पद्यपर्यन्तं **स्वरचर्चा**।

अथान्यामाह—

**सुब्रह्मण्येव या साधोरनेकश्रुतिभूषिता।**
**अन्तोदात्तगुणार्मूतिः सा नमस्या न कस्य वा ॥ ७ ॥**

सा साधोर्मूर्तिः स्वरूपं कस्य नमस्या वन्द्या न भवति, अपि तु सर्वस्यापि वन्द्या भवति। सा का। या अनेकाभिः श्रुतिभिर्वेदैर्ऋग्यजुःसामाथर्वाख्याभिर्भूषिता **सा वेदार्था** सर्ववेदाभ्यासवतीत्यर्थः। अथवा अनेकाभिः श्रुतिभिः कर्णैर्भूषिता नानादेशस्थलोककर्णपथागतेत्यर्थः। तथा आत्ता स्वीकृता उदात्ता महान्तो यमनियमदमानसूयाऽस्पृहादयो गुणा यया सा। एषां लक्षणानि नीतिग्रंथेभ्योऽध्येयामि।

यद्वा आत्तोऽङ्गीकृत उदात्तो महान् वेदार्थवेदितारूपो गुणो यया सा वेदार्थविदः सर्वदेवता बुध्या प्राणिभिर्नमस्या इत्यर्थः। तथाच तैत्तिरीय-ब्राह्मणम्। यावत्ती देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति। तस्माद् ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यानाश्लीलं संकीर्त्तयेदेता एव देवताः प्रीणातीति।

अनया वेदशास्त्रसम्मत्या ब्राह्मण्ये गौरवं सूचितम्। तथा चाहात्रिः—

तस्माद्वेदेन शास्त्रेण ब्राह्मण्यं ब्राह्मणे स्मृतम्।
तत्त्वेकेनैव देवेन भगवानत्रिरब्रवीत्॥ इति॥

केव सुब्रह्मण्येव। नमस्या भवति। अत्र पादबंधरहितं यजुरात्मकं सुब्रह्मण्योइमिन्द्र आगच्छ हरिव आगच्छ इत्यादिकं मघवन्नित्यन्ते सुब्रह्मण्या-शब्दोपलक्षितं वाक्यमपरित्यक्तस्त्रीलिङ्गं सुब्रह्मण्या नामकमभिधीयते। कीदृशी सुब्रह्मण्या। न एकश्रुतिभूषिता। अनेकश्रुतिभूषिता।

अयमर्थः—यज्ञकर्मण्यजपन्यूंखसामसु (पा० सू० १।२।३४) विभाषा-छन्दसीति (पा० सू० १।२।३६) द्वाभ्यां सूत्राभ्यामेकश्रुतिः प्राप्ता। सा न सुब्रह्मण्यायां स्वरितस्य तूदात्तः। (पा० सू० १।२।३७) सुब्रह्मण्यायामेक-श्रुतिर्न स्यात्। लक्षणान्तरेण प्राप्तस्य स्वरितस्य तूदात्तो भवति। एक-श्रुतिर्नामोदात्तानुदात्तस्वरितानां भेदतिरोधानम्। तच्च सुब्रह्मण्याख्ये मन्त्रे नास्ति तत्र सस्वर एव पाठः।

अत्र सुब्रह्मणि साधुरिति साध्वर्थे यत्प्रत्ययः। सच तित्स्वरितम् (पा० सू० ६।१।१८५) इति स्वरितस्तस्य टापापित्वादनुदात्तेन सहैकादेशः स्वरितानुदात्तयोरान्तर्यतः स्वरितस्ततो निपातेनाद्युदात्तेनौशब्देनौमाङोश्च (पा० सू० ५।१।९५) इति पररूपम्। तत्राद्युदात्तस्वरितयोरेकादेशः स्वरित एव तस्येमामेकश्रुतिं प्रतिषिध्योदात्तो विहितः। अतो वचनबलादुदात्तः उदात्ताख्यो गुणो यया सा। इदमेकमुदाहरणं साधितम्। एवमिन्द्र आगच्छ-इत्यादि सर्वं वाक्यमस्यैवोदाहरणम्। तत्र स्वरसाधनिका काशिकातो बृहट्टीकातो वावगन्तव्या संक्षेपप्रवृत्तत्वान् मया नोक्ता॥ ७॥

अथान्यामाह—

**उदात्तादिविवेकस्य तिरोधानं कदाचन।**
**वेदे विलोक्यते किन्तु तत्र सत्पुरुषे क्वचित्॥ ८॥**

उदात्तः समीचीनः साधुरिति यावत् । आदिशब्देन नीचोऽसाधुस्तयोर्विवेको भेदाख्यानं तस्य तिरोधानमपलापः क्वचिदपि कस्मिन्नपि सत्पुरुषे न विलोक्यते । सत्पुरुषो हि राजपुरुषादि साध्वसाधुस्वरूपं सम्यग् बुध्वा तथा तथा दानादि विधत्ते । वेदे तु विवरीतमुदात्तानुदात्तस्वरिताख्यानां भेदानां तिरोधानं दृश्यते । तथाहि यज्ञकर्मण्यजपन्यूंखसामसु (पा० सू० १।२।३४) त्रैस्वर्येण वेदे मन्त्राः पठ्यन्ते। तेषां यज्ञकर्मण्यैकश्रुत्यं भवति । जपन्यूंखसामानि वर्जयित्वा अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वतो यज्ञकर्मण्यस्य मन्त्रस्यैकश्रुत्यमेव भवति तथाऽष्टमद्वितीये ये यज्ञकर्मणीत्यनुवृत्तौ प्रणवष्टेः (पा० सू० ८।२।८९) इति जिन्वतीत्यन्तिमस्येकारस्य प्रणवनामक ओंकारो ओकारो वा भवति । तथा याज्यान्त (पा० सू० ८।२।९०) इति तस्यैव प्लुतो भवति । अन्यच्च विभाषा छन्दसि (पा० सू० १।२।३६) छन्दसि विषये नैकश्रुतिर्भवति । पक्षे त्रैस्वर्यमेव । वेति प्रकृते विभाषाग्रहणं यज्ञकर्मणीत्यस्य निवृत्यर्थम् । तेन स्वाध्यायकालेपि पाक्षिक एकश्रुतिविधिर्भवति ।

अग्निमीले पुरोहितम् । अग्न आयाहि वीतये इत्यादि । एवं पुनर्वेदे उदात्तादीनां भेदानां तिरोधानं दृश्यत न सत्पुरुष इति वेदापेक्षया सत्पुरुषोऽभ्यर्हित इति साध्वन्योक्तितात्पर्यार्थः ॥ ८ ॥

अथापरामाह—

**सर्वत्रोच्चैस्तरां नित्यमनेकश्रुतिभूषितम् ।**
**वौषट्शब्दाधिकं साधुं सेवन्ते देवता अपि ॥ ९ ॥**

सुजना एव साधुं सेवन्ते इति न । किन्तु देवता अपि निःपक्षपाता वसिष्ठा[1]दयोऽपि साधुं मन्वते । कीदृशम् । सर्वत्र सजातीयेषु विजातीयेषु राजसभासु चोच्चैस्तरामतिशयेनोच्चैरुच्चैस्तरां सर्वत्र मान्यमित्यर्थः । आमन्तमव्ययं द्वितीयैकवचनान्तम् । अव्ययादाप्सुपः (पा० सू० २।४।८२) इति विभक्तेर्लुक् । पुनः कीदृशं नित्यं सदा अनेकाभिः श्रुतिभिः ऋगथर्वसामयजुर्भिर्भूषितं शोभितम् । सार्थसकलवेदार्थपाण्डित्ययुक्तमित्यर्थः । अथवा अनेकेषु बहुषु देशेषु श्रुतिः कीर्तिद्वारा प्रसिद्धिस्तया भूषितम् ।

अतएव वौषट्शब्दाधिकं वौषट्शब्दादप्यधिकं यज्ञियवौषट्शब्दश्रवणात् पुण्योत्पत्तिरस्ति तदपेक्षया साधोः स्मरणदर्शननामग्रहणादिकं नाधिकं मान्यत्वमित्यर्थः । अत्र दृष्टन्तो वौषट्शब्दे वैलक्षण्यमुच्यते । यथा उच्चैस्तरां

---

१. वसिष्ठो नाम वैदिकः ऋषिः पुराणेषु ब्रह्मणो मानसपुत्रत्वेन प्रसिद्धः ।

वा वषट्कारः (पा० सू० १।२।३५) अस्यार्थः यज्ञकर्मणीत्यनुवर्त्तते। यज्ञकर्मणि वषट्कारः। वषट्शब्द उच्चैस्तरां वा भवति पक्षे एकश्रुतिः। वषट्शब्देनात्र वौषट्शब्दो लक्ष्यते। तस्येदं स्वरविधानम्। यद्येवं वौषट्ग्रहणमेव कस्मान्न कृतम्। विचित्रा हि सूत्रकृतिः पाणिनेरिति काशिका। वौषडित्यक्षरगौरवपरिहाराय वषडिति लाघवाश्रुयणं कृतम्। अत्र वर्णनिर्देशे वर्णात्कारः (वा० ७५६) इतिकारप्रत्ययो वर्णसमुदायस्यावर्णत्वादनुपपन्नः। तथाप्यस्मादेव ज्ञापकाद्वर्णसमुदायादपि कारप्रत्ययो भवति। अतएवैकार इत्यादि प्रयोगोपपत्तिः। अत्रोदाहरणम्। सोमस्याग्ने ब्रूहि३। वौषट्। अत्र हि ब्रूहि प्रेष्य श्रौषट् वौषडावहानामादेः।

अस्यार्थः—ब्रूहिः प्रोष्य श्रौषट् वौषट् आवह इत्येतेषां शब्दानामादेरचः प्लुत उदात्तो भवति यज्ञकर्मणिः। अनेन वौ इत्यौकारस्य विहितप्लुतोदात्तस्योच्चैस्तरां वां वषट्कार इत्युदात्ततरत्वं विधीयते।

केचित्तु द्वयोरप्यचोरुदात्ततरो भवतीत्याहुस्तदा याज्यान्तापेक्षः प्रकर्षः। स्वार्थिकस्तरबित्यन्ये। तत्रोदात्तमात्रं प्लुतम् प्रथमस्याचः सिद्धिमिति द्वितीयस्याच उदात्ततरत्वं विधीयत इति पदमंजरी। अतो वौषट्शब्दो यज्ञकर्मण्येव विकल्पेनोच्चैस्तरां प्रयुज्यते नतु साहसिकपाठे। पक्षे पुनरेकश्रुत्योदात्तानुदात्तस्वरितानां भेदानां तिरोधानरूपया भूषितमेतादृशं वौषट्शब्द मन्त्रमय्यो देवता एव सेवन्ते, नत्वन्ये ऋत्विगादयो लोभप्रवृत्तत्वात्तेषाम्। साधुस्तु तदपेक्षया शब्दवलेनातिविलक्षणत्वादधिकतर इति ॥ ९ ॥

अथार्ययान्यामाह –

**स्वासत्तिविरहभाजो विधिनानीताः समुन्नतिं सन्तः।**
**परमुन्नतिं नयन्तो न कथं संबुद्धिशब्दसमाः ॥ १० ॥**

सन्तः साधवः संबुद्धिशब्देन एकवचनं संबुद्धिः (पा० सू० २।३।४९) संबोधने प्रथमाया एकवचनं संबुद्धिसंज्ञं स्यादिति संबुद्धिसंज्ञकप्रथमैकवचनान्तेन समास्तुल्याः कथं न स्युरपितु तत्तुल्या एव ते सुजना इत्यर्थः। कीदृशाः सन्तः। स्वासत्तीति। स्वं धनं तत्रासत्तिर्मदीयत्वेन ज्ञानं तद्विरहस्तदनासक्तिस्तां भजन्ति। पात्र[1]सादेवानुदिनं धनं विदधानाः।

आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः।
गतिरेकैव वित्तस्य दानमन्या विपत्तयः॥

---

**१. पात्राधीनमित्यर्थः।**

यद्ददाति यदश्नाति तदेव धनिनो धनम् ।
अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ।।

इतिवचनादित्यर्थः । पुनः कीदृशाः विधिना प्राग्जन्मभवसुकृतविशेषेण समुन्नतिं महत्त्वमाधिक्यं नीताः प्रापिताः परं स्वस्मादन्यं यं कंचित् प्रणयपूर्वकसंभाषणाद्यादरेण मृदुवाचा चोन्नतिं नयन्तः । महान्तं कुर्वाणा इत्यर्थः । दृष्टान्तपक्षे संबुद्धिशब्दाः कीदृशाः ।

सौ प्रथमैकवचने आसत्तिः श्रूयमाणसुप्रत्ययसंबंधस्तस्य एङ्ह्रस्वात् संबुद्धे ( पा० सू० ६।१।६९ ) इत्यादिभिर्लोपविधानात् तद्राहित्यं भजन्तो हे देवदत्त इत्यादयः संबुद्धिःशब्दाः तथा विधिना षाष्ठिकेनामन्त्रितस्य च ( पा० सू० ५।१।१९८ ) त्यनेनोदात्तविधिना सनुन्नतिमुच्चतामुदात्ततां नीताः प्रापिताः ।

सूत्रार्थस्तु आमन्त्रितस्यादिरुदात्तो भवतिइति देरित्यत्रैकार उदात्तः । अन्येऽचोऽनुदात्ताः । अनुदात्तं पदमेकवर्जम् ( पा० सू० ६।१।१५८ ) इति वचनात् ।

अस्यार्थः—यत्रोदात्तः स्वरितो वा विधीयते तमेकपदं वर्जयित्वा शिष्टं पदमनुदात्ताच्कं भवति । एवं यज्ञदत्तादयोपि संबुद्धिशब्दा द्रष्टव्या । तथापरं पदं संबुद्धिशब्दरूपमुच्चतामुदात्ततां नयन्तः प्रापयन्तः यथा देवदत्त यज्ञदत्त च युवामत्र तिष्ठतमित्यत्र द्वयोरप्यामन्त्रितपदयोर्मध्ये आष्टमिकेन आमन्त्रितं पूर्वं मविद्यमानवृत् ( पा० सू० ८।१।७२ ) ति सूत्रेण पूर्वस्यामन्त्रितपदस्याविद्यमानत्वमाश्रित्य द्वितीयस्यामन्त्रितस्याष्टमप्रथमपादस्थेनामन्त्रितस्य च(पा०सू० ८।१।१९) । पदात्परस्यापादादौ वर्त्तमानस्यामन्त्रिस्य पदस्य सर्वस्यानुदात्तो भवति । पचसि यज्ञदत्तेत्युदाहरणमस्य । प्रकृते तु यज्ञदत्तेत्यस्य परस्यामन्त्रितपदस्य पदात् परस्यापादादौ स्थितस्य प्राप्तं निपातमपनीय तदुच्चतां नयन्ति । एवं देवदत्त पचसीत्यप्युदाहरणम् । अत्र हि तिङ्ङतिङ् ( पा० सू० ८।१।२८ ) । अतिङन्तात् पदात्परं तिङन्तं विहन्यते इति प्राप्तमपि निघातं पूर्वामन्त्रितस्याविद्यमानवत्वात् पदात् परत्वाभावसम्पादनेन निवार्य परं तिङन्तं धातुरूपं प्राकृतिकीमुच्चतामुदात्ततां नयन्तीति सम्पन्नमुभयोः साम्यम् । नयतिर्द्विकर्मा ।। १० ।।

अथेमां गूढार्थामन्योक्तिमुपजातिकया स्पष्टर्थामाह—

**अनीचसङ्गप्रणया महान्तः परोन्नतेर्ये परितोषवन्तः ।**
**ते पूर्वसंबुद्धिपदोपमेया यत्नेन नेया नयनातिथित्वम् ।। ११ ।।**

ते महान्तः साधवः देवदत्त पचसीत्यादौ पूर्वमुच्चारितं यत्संबुद्धिपदं तेनोपमेयास्तत्साम्यभाजः सन्तो यत्नेन [1]नयनातिथित्वं दृग्गोचरत्वं नेयाः प्रापणीयाः । कीदृशाः । न नैव नीचानां दुष्टानां सङ्गः प्रणयः प्रीतिर्येषां तैः । तथा परेषां मित्रशत्रूदासीनानामुन्नतेरैश्वर्याद्यभिवृद्धेः परितोषवन्तः संतुष्टाः न तत्रासूयावन्त इत्यर्थः । सम्बुद्धिपदपक्षे तु यज्ञदत्त देवदत्त च इत्यादौ । देवदत्त पचसीत्यादौ च क्रमादामन्त्रितस्य च ( पा० सू० ८।१।१९ )। तिङ्ङतिङः ( पा० सू० ८।१।२८ ) इत्येताभ्यां सूत्राभ्यां प्राप्तस्यानुदात्तत्वस्य आमन्त्रितं पूर्वमविद्यमानवद् ( पा० सू० ८।१।७२ ) इत्यामन्त्रितपदस्याविद्यमानवद्भावेन निवारणाद् यज्ञदत्त पचसीत्यादीनां नीचानामुदात्ततयोच्चतां गतानां सङ्गादनीचसङ्गप्रणयत्वं देवदत्तस्य ज्ञेयम् ।

अतएव परेषां यज्ञदत्तेत्यादीनामुन्नतेरुदात्तत्वात् परितोषभाक् न तन्निमित्तमविद्यमानवद्भावाङ्गीकार इति तत्त्वम् ।। ११ ।।

अथेमामेवान्योक्तिमङ्गीकृत्वोपजातिकयाह—

**विधिप्रतीपत्ववतां परेषां समुन्नतिं ये क्षणसङ्गतानाम् ।**
**पूर्वोदितामन्त्रितसाम्यभाजो रक्षन्ति सन्तः खलु ते कियन्तः ।। १२ ।।**

ते तादृशाः सन्तः खलु तर्के कियन्त कियत् संख्याकाः द्वित्रा एव भविष्यन्ति, न तु भूयांस इत्यर्थः । ते के । ये क्षणसङ्गतानां पथि मुहूर्त्तमिलितानां परेषां केषांचित्तथाविधप्रतीपत्वं भाग्यप्रातिकूल्यं तद्वतां समुन्नतिं महत्त्वं दैवप्रातिकूल्याद्विनश्यदवस्थत्वं रक्षन्ति वस्त्रासनादिभिः परिपालयन्ति । कीदृशास्ते । पूर्वोदितं देवदत्त पचसीत्यादौ पूर्वं प्रयुक्तं यदामन्त्रितं संबुद्धिपदं तत्साम्यभाजः स्युरित्यर्थः ।

दृष्टान्तपक्षे तु—लोके हि पदानुपूर्वीनियमाभावात् द्वेधापि वाक्यं प्रयुज्यते । पचसि देवदत्त, देवदत्त पचसीति । तत्र कदाचिद् देवदत्त पचसि इत्येवं वाक्यं यदा प्रयुज्यते तदा मार्गमिलितानां पांथानामिव पचसीत्यादीनां परपदानां समुन्नतिमुदात्तत्वं तिङतिङ ( पा० सू० ८।१।२८ ) इति विधेः प्रतीपत्वे नीचताविधायकस्वरूपप्रातिकूल्येऽपि सति स्वयमविद्यमानवद् भूत्वा रक्षन्तीति ।। १२ ।।

अथान्यामाह—

**अपरस्वप्रणयिनां परस्वप्रणयैः सदा ।**
**असद्भिरिव संबुद्धिशब्दैः का समता सताम् ।। १३ ।।**

---

१. दाननयनातिथित्वम् क पुस्तके ।

सतामसद्भिर्दुष्टैः का समता तुल्यताऽपि तु न कापि । कीदृशानां सतां। परस्वे परधने प्रणयिन आग्रहशीलाः । न परस्वे प्रणयिनोऽपरस्वप्रणयिनः परस्वग्रहणशीला न भवन्ति ते । यत्तु न विद्यते परस्वे परधनादौ प्रणयो येषान्तेऽपरस्वप्रणयिन इति समास इत्युक्तं तदुपेक्ष्यम्, बहुव्रीहिणा गतार्थत्वादिर्निव्यर्थः स्वात् । कीदृशैरसद्भिः । सदा परस्वे प्रणयः प्रीतिर्येषां तैश्चौरैरित्यर्थः । केषां कैरिव । सतां साधूनां राम इत्यादीनां शब्दानां संबुद्धिशब्दैः हे राम इत्यादिभिरिव तुल्यता नास्ति । कथं भूतानाम् । परश्चासौ सुश्च परसुस्तत्राप्रणयिनः प्रीतिरहिताः । न परस्वप्रणयिनोऽपरस्वप्रणयिनः । परभूतसुप्रत्ययेन प्रणयवताम् । कीदृशैः संबुद्धिशब्दैः । परो यः सुस्तत्र न प्रणयो येषां तैः । एङ्ह्रस्वात् सम्बुद्धेः ( पा० सू० ६।१।६९ ) इत्यादिभिः सुप्रत्ययस्य लोपविधानान्न तत्र सम्बोधनपदस्य प्रणयः ॥ १३ ॥

अथान्यां वसन्ततिलकयाह—

**रक्षन्ति ये परसमुन्नतिमन्तराय-**
**हीनां विधाय रचितैरुचितैरुपायैः ।**
**सम्बोधनादिह परो भवता तिङा ते**
**सन्तः प्रयान्ति समतामसतान्यसाम्याः ॥ १४ ॥**

इह लोके ते सन्तस्तिङा पचसीत्यादितिङन्तपदेन समतां तुल्यतां प्रयान्ति। कीदृशाः। अमतान्यसाम्याः न मतममतम् । न सम्मतमन्येषां अन्येषु वा साम्यं येषां ते तत्तुल्या अन्ये नैव सन्तीत्यर्थः । ते के सन्तः । ये उचितैर्योग्यै रचितैर्निर्मितैस्तदीयगुणाविष्करणादिभिरुपायैः प्रयत्नैः परस्य कस्यापि समुन्नतिं महत्त्वं दुर्जनकृतनिन्दारूपैरन्तरायैर्विघ्नरहितां विधाय रक्षन्ति । कीदृशेन । तिङा सम्बोधनात् परीभवता । अभूततद्भावे च्विः । पचसीति देवदत्तेत्यादौ हि संबोधनात् प्रागपि पदं कदाचित् प्रयुज्यते स्वेच्छाधीनपदप्रयोगस्य नियमाभावाद्यदा कदाचिद्देवदत्त पचसीति सम्बोधनात् परं तिङन्तं प्रयुज्यते । तदा तत्परीभवत्तादृशेनेत्यर्थः । तत्रास्मिन् दृष्टान्ते पचसीति तिङन्तं पदमपि पचसि देवदत्तेत्यस्यामवस्थायां यदा तत् परत्वेन प्राप्तमामंत्रितस्योदात्तनिवारकं निघातं निश्रित्य पश्चात् स्वयं ततः परं भवत्पचसीति पदं तस्यामन्त्रितस्य समुन्नतिमुदात्तत्वं रक्षतीति साम्यम् ॥ १४॥

अथ शब्दान्तरेणेमामेव स्पष्टार्थामाह—

**त्रायन्ते साधवोऽन्येषामुपायेनाप्युदात्तताम् ।**
**परं भूत्वा तिङन्तं हि रक्षत्यामन्त्रितस्य ताम् ॥ १५ ॥**

साधवोऽन्येषां मित्रोदासीनादीनां दुष्टप्रयुक्तनिन्दानिराकरणोपायेनापि शब्दात् स्तुत्य चोदात्ततामुन्नतिं रक्षन्ति। तत्र दृष्टान्तः। हि शब्द इवार्थः। यथा देवदत्त पचसीत्येवं विधायां वाक्यप्रयुक्तौ तिङन्तं पदं पचसीति परमग्रे भूत्वा आमन्त्रितस्य तां प्रसिद्धां उदात्ततां रक्षतीति स्पष्टार्थं पूर्वपद्ये नैतत् पद्यम्॥ १५॥

अथापरामाह—

**समस्तमुच्चतां नेतुं रचितानेकरीतयः।**
**समासोदात्तशास्त्रेण समानाः किन्न सज्जनाः॥ १६॥**

सज्जनाः साधवः 'समासस्य' ( पा० ६।१।२२३ ) इति समासोदात्तशास्त्रेण समानाः किं न स्युरपितु समाना एव भवन्ति। कीदृशास्ते। समस्तं मित्रोदासीनशत्रुरूपं लोकमुच्चतां महत्त्वं नेतुं प्रापयितुं रचिता निष्पादिता अनेका रीतयः प्रकाराः प्राप्त्यनुकूला उपाया यैस्ते रचितानेकरीतयः स्युः। दृष्टान्ते समासोदात्तविधायकं शास्त्रं समासोदात्तशास्त्रम्। समासस्य ( पा० सू० ६।१।२२३ ) समासस्यान्त उदात्तो भवति। एतदपि शास्त्रं समस्तं समासनिष्ठं राजपुरुषादिपदमुच्चतामुदात्ततां नेतुं गमयितुं रचितनानाप्रकारम्।

तथाहि—ब्राह्मणस्य समित् ब्राह्मणसमिदित्यादौ ब्रह्मणोऽपत्यं ब्राह्मण इति पूर्वपदेऽपत्यांशे प्रत्ययस्वरेणान्तोदात्ते प्राप्ते समिध्यतेऽनेन इति समिदित्यस्य सम्पदादित्वात् करणार्थक्विबन्तस्वोत्तरपदस्य गतिकारकोपपदात् कृत् ( पा० सू० ६।२।१३९ )। गतेः कारकादुपपदात् कृदन्तमुत्तरपदं प्रकृतिस्वरं भवत्यनेन च कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते समासस्य ( पा० ६।१।२२३ ) इति समासान्तोदात्तत्वं तदपवादो भवति। नानापदस्वराणामपवाद इति काशिका। तच्च समासान्तोदात्तत्वं स्वरविधौ व्यंजनमविद्यमानवत् ( परि० ८१) इति वचनात् समिदित्यत्रेकारस्यौदात्ततां भवत्वन्येषां निघातः 'अनुदात्तं पदमेकवर्जम् ( पा० सू० ६।१।१५८ ) इत्युक्तेः। एवं च समासान्तोदात्तशास्त्रं समासान्तापवादकप्रकृतिस्वरेण क्वचित् पूर्वपदाद्युदात्तत्वं विद्यते। क्वचित् पूर्वपदान्तोदात्तत्वम्, क्वचिदुत्तरपदाद्युदात्तत्वम्, क्वचिदुत्तरपदाद्युदात्तत्वं च विधत्ते। तद्यथा। बहुव्रीहौ प्रकृत्या पूर्वपदम् (पा० सू० ६।२।१ )। स्पष्टार्थम् सूत्रम्। प्रसिद्धमुदाहरणम् कार्ष्णोत्तरा[1]संग इति।

'कृष्णमृगविकारः कार्ष्णस्तादृशं उत्तरासंगम् उपरितनं प्रावरणं यस्येत्यत्र कार्ष्ण इति प्राणिरजतादिभ्योऽञ् ( पा० सू० ४।३।१५४ ) इति अञन्तत्वात्

---

१. 'कार्ष्णोत्तरासङ्गरुचं विदधच्चौतपल्लवीम्' इति माघः २ सर्गे।

ञ्नित्यादिर्नित्यमिति ( पा० सू० ६।१।१९७ ) आद्युदात्तः समासान्तोदात्तत्वं बाधित्वा कार्ष्णशब्द आद्युदात्तो भवति । शेषनिघातश्च ।

अथप्रसिद्धमुदाहरणम् । माला प्रच्छ इति । अत्र हि मालादीनाञ्च ( पा० सू० ६।२।४८ ) । मालादीनां शब्दानामादिरुदात्तः स्यात् प्रच्छशब्दे उत्तरपदे इति मालाशब्द आद्युदात्तः ।

अथ पूर्वपदान्तोदात्तोदाहरणम् । गुडमिश्रमुदकं गुडोदकम् । अत्र उदकेऽकेवले ( पा० सू० ६।२।९६ ) । अकेवलं मिश्रं तद्वाचिनि समासे उदकशब्दे उत्तरपदे पूर्वपदमन्तोदात्तं भवतीति गुडशब्दोऽन्तोदात्तः ।

अथोत्तरपदाद्युदात्तोदाहरणम् । शुक्लकर्णः । अत्र वर्णो वर्णलक्षणात् ( पा० सू० ६।२।११२)। इतिवर्णवाचिनो लक्षणवाचिनश्च परः कर्णशब्द-उत्तरपदं बहुव्रीहावाद्युदात्तं स्यादिति कर्णशब्द आद्युदात्तः ।

अथोत्तरपदान्तोदात्तोदाहरणम् । सुनीथः । अवभृथः । अत्र थाथघञ्क्ताजवित्रकाणां ( पा० सू० ६।२।१४४ ) । थ, अथ घञ्, क्त, अच्, अप्, इत्र, क इत्येवमन्तानामुत्तरपदानां गतिकारकोपपदेभ्यः परेषामन्त उदात्तो भवति । हनिकुषिनीरमिकाशिभ्यस्थन् । अवेर्भृञ् इति थन्नन्तावेतौ । तत्र कृदुत्तरपदप्रकृतिस्वरत्वेनाद्युदात्ते प्राप्तेऽनेनान्तोदात्तत्वं विधीयते । एवमथादिप्रत्ययान्तानामुत्तरपदानामुदाहरणानि काशिकातोऽवसेयानि । इत्येवमनेकैः प्रकारैः समासान्तोदात्तशास्त्रं स्वयं निघातमनुभवत्सत्तात्तत्समासपूर्वपदोत्तरपदानामुदात्ततां रचयतीत्यलं विस्तरेण ॥ १६ ॥

अथान्यामाह—

**साधोरामन्त्रितस्येव सुबन्तस्यैव सङ्गतिः ।**
**उदात्तलक्ष्मीमुचितां सर्वस्मा एव यच्छति ॥ १७ ॥**

साधोः सङ्गतिः सम्मिलनं सर्वस्मा एव स्वकीयपरकीयत्वाभ्यामविचारिताय यस्मै कस्मैचिदेवोदात्तां महतीं लक्ष्मीं महत्त्वरूपां शोभां प्रचुरसुवर्णमुक्ताफलहीरकादिरूपां वा यच्छति ददाति । सर्वस्यापि सततमभिमतसकलवस्तुकल्पनाकामधेनुः सत्सङ्गतिरिति भावः । तदुक्तं जीर्णैः—

जाड्यं धियो हरति सिञ्चति वाचि सत्यम्
मानोन्नतिं दिशति पापमपाकरोति ।
चेतः प्रसादयति दिक्षु तनोति कीर्तिम्
सत्सङ्गतिः कथय किं न करोति पुंसाम् ॥ इति ॥

वाशिष्ठरामायणेऽपि—

रसायनमयी सीता परमानन्ददायिनी ॥
नानन्दयति कं नाम साधुसंगतिचन्द्रिकेति ॥

अत्र दृष्टान्तः। यथामन्त्रितपदस्य संगतिः सुबन्तायैव पदायोचितां वाचनिकीमुदात्तस्वरूपां लक्ष्मीं यच्छति। कथं सुबामन्त्रिते पराङ्गवत्स्वरे (पा० सू० २।१।२) तादात्म्यातिदेशोऽयम्। सुबन्तानामामन्त्रिते परतः पराङ्गवद्भावमृत्पिण्डवदेकतां विदधाति। कुंडे नाटन्। परशुना वृश्चन् इत्यादौ हि केवलस्यामन्त्रितस्य षाष्ठिकामन्त्रितस्वरउदात्तः (पा० ६।१।१८) प्राप्तस्तस्य कुण्डेनेत्यादि पूर्वपदा परस्याष्टमिकामन्त्रितनिघातं (पा० ८।-१।१९) प्राप्तं परांगवद्भावेन निवार्य कुण्डेनाटन्नित्येवं समुदायरूपस्य सुबन्तस्यामन्त्रिताद्युदात्तत्वं शेषनिघातश्च क्रियते। स यथा आमन्त्रितसंगते-र्महिमेति दृष्टान्तार्थः।

ननु परांगवद्भावाभावेऽपि नेब्विषयस्यानिसन्तस्य (फि० सू० २६) नेबितिपूर्वाचार्याणाम् नपुंसकस्य संज्ञा। नपुंसकविषयस्य सर्पिरित्या-दीसन्तस्य वर्जितस्यादिरुदात्तो भवतीत्यनेन फिट्सूत्रेण कुंडशब्द आद्यु-दात्तः अटन्नित्यामन्त्रिस्य पदात् परस्याष्टमिको निघातोऽस्त्येव। पराङ्गवद्भावे सत्यपि च सुबन्तसमुदायस्यैकता पत्या कुंडेनाटन्नित्या-द्यामन्त्रिताष्टमिकाद्युदात्तत्वे शेषनिघाते चायमेव स्वर इत्येतन्नास्ति विशेषः। सत्यम्। अत्र यद्यपि नास्ति तथापि परशुना वृश्चन्नित्यत्राङ्परयोरुपपदयोः सतोः खनिश्चृभ्यां डिच्चेति कुप्रत्यान्तत्वेन परशुशब्दस्यान्तोदातस्य परांग-वद्भावेनैवैकामन्त्रित्वं सम्पाद्याद्युदातत्वं विधीयत इत्यस्ति विशेषः।

किंच पदान्तस्र्वंटन्नित्येतत्पादादौ वर्त्तते तदा अनुदात्तं सर्वमपादादौ (पा० सू० ८।१।१८) इत्यधिकारादामन्त्रितनिघाताभावात् तदा तत्रासति पराङ्गवद्र्भावेऽटन् इत्यत्रामन्त्रितद्युदात्तत्वेनोभयोरपि पदयोरा-द्युदात्तत्वं स्यादित्यत्रापि विशेषः।

अन्यच्च पुल्लिगोपि कुंडशब्दोऽस्ति। 'अमृते जारजः कुंडो मृते भर्त्तरि गोलकः' इत्यमरोक्तेः (अ० को)। कुण्डीति जानपदादि सूत्रे (पा०-सू० ४।२।४२) ङीषि भवतीति, तदा तु मुख्यमेवोदाहरणमिदम्। एवं मद्राणां राजन्नित्याद्यप्यूह्यम्। तृतीयान्तादि पदानामत्र निमित्तता विव-क्षितास्तीति परांगवद्भावो भवति। तन्निमित्तत्वाभावस्तु यत्र नास्ति। मरुद्भिरग्न आयाहि मरुद्भिरिन्द्र सख्यं ते अस्ति इत्यादिषु तत्रैव भवतीत्यल-मियता। इति स्वरचर्चा ॥ १७ ॥

अथान्यामार्ययाह—

**आभाति यस्य सङ्गादिट इव गुणवान् गुणोऽस्ति तत् क्त्वेव ।**
**स इडागम इव सुजनः सुलभो न विनानुकूलविधिम् ॥ १८ ॥**

स सुजनोऽनुकूलविधिं प्राग्भवीयसुकृतसम्पत्तिं विना न सुलभो न प्राप्यः । क इव इडागम इव । यथा एकाच उपदेशेऽनुदात्तात् ( पा० सू० ७।२।१० ) इत्यादिप्रतिषेधाप्रतिबंधकम् 'आर्द्धधातुकस्येड् वलादेः ( पा० ७।२।२५ ) इत्यनुकूलं योग्यमिड्विधिमासाद्य देवित्वा, चेतित्वा इत्यादाविडागमेन सर्वत्र प्रतिषेधरूपप्रतिबन्धात् ।

स कः । यस्य साधोः संगतिमहिम्ना गुणोज्झितो निर्गुणोऽपि पुमान् गुणवान् सन्नाभाति ।कस्य क इव । इटः सङ्गात् क्त्वे । यथा क्त्वा प्रत्ययः कित्वाद् गुणरहितोऽपीडागमस्य संसर्गाद् गुणवान् भवति । कुतः । न क्त्वा सेट् ( पा० सू० १।२।१८ ) सेट्क्त्वा किन्न भवतीति कित्वाभावाद् गुणानिमित्तं देवित्वा चेतित्वा इत्यादौ भवतींति भावः । द्वितीय इव शब्दः पाद पूरणी ।

ननु क्त्वाग्रहणमपनीय न सेडित्येवं लाघवात् सूत्रमस्तु । न चैवं गुधितो गुधितवान् इत्यादौ निष्ठायां सेटि (पा० ६।४।५२) इति कित्वप्रतिषेधे गुणप्रसंग इति वाच्यम्, निष्ठाशीङ स्विदिमिदिक्ष्विदधृषः (पा० १।२।१९) इति सूत्रं नियमार्थं भविष्यति । शीङादिभ्य एव परनिष्ठा न किदिति । विपरीतस्तु नियमो निष्ठैवेति व्याख्यानान्न भवति ।

अत्रोच्यते निगृहीतः । निकुचितिः इत्यादिषु न सेडिति मित्वप्रतिषेधे क्रमेण संप्रसारणगुणप्रतिषेधोपधालोपा न स्युरिति क्त्वा ग्रहणमवश्यं विधेयम् । विशेषविचारस्तु पदमंजर्यादिभ्योऽवसेयः ॥ १८ ॥

अथान्यामाह—

**क्रमिधातोः समः साधुः स्फीत्या वृत्या च सर्गतः ।**
**परन्तु तस्मादधिकः परस्मैपदमर्जयन् ॥ १९ ॥**

स्फीतिर्महत्वम् । वृत्तिरप्रतिबन्धः । सर्ग उत्साहः । एतैर्गुणैरुपलक्षितः साधुः क्रमिधातोरनेकार्थत्वाद्धातोरेष्वर्थेषु विद्यमानस्य समो ज्ञेयः । परन्त्वयं विशेषः परस्मै लोकाय पदं स्थानं राज्यादि । पद्यते गम्यते इति पदम् द्रव्याद्यर्जयन् तस्मात् क्रमिधातोरधिको भवति । "पदं व्यवसितित्राणस्थानलक्ष्मांध्रिवस्तुषु" इत्यमरः ( अ० को०) क्रमिस्त्वेतै रर्थैः सम्पन्नः सन्नात्मने-

पदमर्जयति । यथा 'वृत्तिसर्गतापनेषु क्रमः । ( पा० सू० १।३।३८ ) शेषात्-कर्त्तरि परस्मैपदे प्राप्ते वृत्यादिषु अर्थेषु क्रमेरात्मनेपदं भवति । ऋक्षु क्रमते बुद्धिः । न प्रतिहन्यत इत्यर्थः । अध्ययनाय क्रमते । उत्सहत इत्यर्थः । क्रमन्ते अस्मिन् शास्त्राणि । स्फीतानि भवन्तीत्यर्थः ।। १९ ।।

अथान्यामार्ययाह—

**आत्मीयगुणनिषेधेऽनधिगतखेदोऽपि जातु न क्षमते ।**
**परगुर्णनिषेधमार्यो न धातुलोप आर्धधातुकवत् ।। २० ।।**

आर्यः साधुः परेषां पिशुनैः कृतं गुणनिषेधं मूर्खोऽयम् अशूरोऽयमित्यादिकं जातु कदाचिदपि न क्षमते । दुष्टकृतां निन्दां न सहते । कीदृशः । आत्मीयाः स्वीयाः गुणाः विद्याशौर्यादयस्तेषामन्यकृते निषेधेऽनधिगतो प्राप्तखेदो दैन्यं येन स तादृशोऽपि । आत्मनिन्दाश्रवणेऽप्राप्तखेदोऽपि साधुः परनिन्दामन्यकृतां नैव शृणोति । स्वयमपि न करोतीत्यर्थः । अत्र दृष्टान्तः न धातुःलोप आर्धधातुके (पा० १।१।४) इत्येतत्सूत्रस्यार्द्धधातुकाख्यं पदमिवोक्त-विशेषणद्वययुतं भवति । तेन तुल्यं क्रिय चेद्वतिः (पा० सू० ५।१।११५) इति वतिः । एवं दुरीणो लोपश्चेति ( १७७ ) उणादिसूत्रम् दुः शब्दे उपपदे इणो धातोरप्रत्ययो भवति धातोश्च लोपः । दुःखेन ईयते प्राप्यते इति दूरमित्यत्र यद्यपि कृत्स्नस्य धातोर्लोपः संभवति तथाप्येवंविधे विषये गुणवृद्धयोः प्राप्त्य-भावादेकदेशे धातुशब्दो वर्त्तते । तथा सति निष्कृष्टः सूत्रार्थः । धात्वंशलो-पनिमित्ते आर्धधातुके परे ये गुणवृद्धी प्राप्नुतस्ते न भवतः ।

लोलुवः । पोपुवः । मरीमृजः । लूञ् खेदने । पूञ् पवने । मृजूष शुद्धौ । लूञ् मृज् एभ्यो धातोरेकाज ( पा० सू० ३।१।२१ ) इत्यादिना यङ् । सन्यङोः (पा० सू० ६।१।९) इति द्विर्वचनम् । गुणो यङ्लुकोः (पा०सू० ७।४।४३ ) इत्यभ्यासस्य गुणः । सृजेस्तु उरदत्वे हलादिशेषे च रीगृदुपधस्य च ( पा० सू० ७।४।९० ) इत्यभ्यासस्य रीगागमः । एवमेभ्यो यङन्तेभ्यः पचाद्यचि कृते यङोऽचि च ( पा० सू० २।४।७४ ) इति यङ्लुकि तमेवाच-माश्रित्य सार्वधातुकार्धधातुकयोः ( पा० सू० ६।३।८४ ) मृजेर्वृद्धिः (पा०सू० ७।२।११४ ) इत्येताभ्यां गुणवृद्धी प्राप्नुतस्ते अस्माद्वचनान्न भवतः । रोरवीति, बोभवीतीत्यादौ तु यङ्लोपे यङो ङित्वाद् यङि लुप्तेऽपि प्रत्ययलोपे प्रत्ययलक्षणम् ,पा० सू० १।१।६२) इति उक्तेः क्ङितिगुणनिषेधो न भवति । तत्र न धातुलोप,पा० १।१।४) इत्येतत्सूत्रस्थमार्धधातुकग्रहणं स्वयं लोलुवादौ गुणनिषेधं कुर्वत् सदनधिगतखेदं साधुताज्ञापनार्थत्वाद् गुणनिषेधस्य खेदमननुभवन्नपि रोरवीतीत्यादावन्येन क्ङितिचे (पा० मू० १।१।५) इति सूत्रेण कृतं गुणं निषे-

धतीत्यादीनामङितां प्रत्ययानां सार्वधातुकत्वेन प्रकृततया न क्षमते निवारयतीत्यर्थः ।

ननु रोरवीतीत्ययुक्तं प्रत्युदाहरणम् । यङो ङिन्निमित्तो गुणनिषेधः तिप्निमित्ता गुणप्रवृत्तिरित्येकनिमित्तत्वाभावात्तन्निवारणार्थमार्धधातुकग्रहणं न कर्त्तव्यमिति चेत् । उच्यते—तुर्वी । थुर्वी । दुर्वी । धुर्वी हिंसार्थाः । मूर्च्छा मोहसमुच्छ्राययोः । एभ्यो यङ्लुगन्तेभ्यः तिबादौ सार्वधातुके परतो राल्लोपः ( पा० ६।४।२१ ) । रेफादुत्तरयोच्छ्वोर्लोपः स्यादित्यनेन कितीत्यनुवृत्तेः प्रयोजनाभावात् झलादिमात्रे विधीयमाने च्छ्वोर्लोपेति वा । तदनिमित्ते सति गुणोपि तन्निमित्त एवेति गुणधात्वेकदेशलोपयोरेकसार्वधातुकनिमित्तत्वात् तोत्तोर्ति, दोधोर्तिः, मोमोर्त्तीत्यादावनेन गुणनिषेधः स्यादित्यार्धधातुकग्रहणं तन्निवृत्तये कृतम् ।

ननु यङोऽचि च (पा० मू० २।४।७४) इति बहुलं छन्दसि ( पा० सू० २।४।७६ ) इत्यनुर्वतिष्यते । पचाद्यचि परतश्छन्दसि भाषायां च यङ्लुक् भवतीत्येकं वाक्यम् । छन्दसि बहुलमनैमित्तिको यङ् लुगिति द्वितीयं वाक्यम् । अतएव यङ्लुक् छान्दस इति यङ्लुकश्छान्दसत्वात् छन्दसि चेदृषस्य वानुविधानान्नेदं प्रत्युदाहरणं संजाघटीतीति चेत्सत्यम् ।

सूत्रकारमते तु भाषायामपि यङ्लुगस्ति । यदयं हुश्नुवोःसार्वधातुके ( पा० सू० ६।४।८७ ) करोति । सूत्रार्थस्तु । हु इत्येतस्यांगस्य श्नुप्रत्ययान्तस्य चांगस्यानेकाचोऽसंयोगपूर्वस्याजादौ सार्वधातुके परे यगादेशो भवति । जुह्वति । सुन्वन्ति । सार्वधातुक इति किम् । जुहुवतुः । असंयोगपूर्वस्येति-शक्नुवन्ति । हुश्नुवोरिति किम् । पोपुवति । रोरुवति । अत्र हि हुश्नुग्रहणाभावेऽनेकाजसंयोगपूर्वमुवर्णान्तं सार्वधातुके परे यङ्लुगन्तादन्यत् व्यावर्त्यमङ्गं नास्ति । यङ्लुगर्थमिति चेत् । न, यङ्लुक् छान्दसस्तत्र हि छन्दस्युभयथा ( पा० सू० ३।४।११७ ) इत्यार्धधातुकत्वादेव यणादेशस्याप्रसंगः । एवं च सति कृतं हुश्नुग्रहणं ज्ञापकमुक्तार्थस्य । तेन बेभिदीति, चेच्छिदीति, चरीगरीति, संजाघटीत्येवमादयः काव्यनाटकादौ प्रयोगा दृश्यन्ते ते उपपन्ना भवन्ति । एवं सति भाषायामपि दोधोर्त्तीत्यादिप्रयोगनिष्पत्तये आर्धधातुक ग्रहणमपि कर्त्तव्यम् ।

अत्र बृहट्टीकायां प्रसक्तानुप्रसक्तचाभूयान्विचारः कृतः स तत एवावगन्तव्य इत्यास्तां तावत् ॥ २० ॥

अथान्यामार्ययाह—

**न समानकर्त्तृतां यो ब्रूते क्वचित् कथंचिदपि ।**
**स एवासादितबाधः कोपि स साधुर्विभाषया रहितः ॥ २१ ॥**

स प्रसिद्धः कोऽपि सहस्रमध्येप्येको विभाषया विरुद्धा भाषा भाषणं तेन रहितो मुक्तोऽस्तीति शेषः । कीदृशः । न सादिता दुष्टैः प्रापिता बाधा यथाकालविहितस्नानसंध्यादिप्रतिबन्धरूपा यस्य सोऽसादितबाधः । स कः। यः साधुः क्वचित् कस्मिन्नपि विषये विवाहादिके समानकर्त्तृतामिदं कार्यं त्वयापि कृतं मयापि कृतमित्युभाभ्यामिति कथंचिदपि अनेकधा निर्बन्धेनापि पृष्टो न ब्रूते । किन्तु त्वयैवेदं कार्यं कृतं न मयेति वक्तीत्यर्थः । क इव क्त्वेव, क्त्वा प्रत्यय इव ॥ २० ॥

अथापरामाह—

**अन्येषां सततं येभ्यः प्रशंसैव प्रकाशते ।**
**ते केपि बिरलाः सन्तस्तद्धितप्रत्यया यथा ॥ २४ ॥**

ते प्रसिद्धाः शुक्रादिसदृशाः केप्यनिर्वाच्यमहिमानः सन्तः साधवः विरलाः । क्वचित् सन्ति न सर्वत्रेत्यर्थः । ते के । येभ्यः साधुभ्यः अन्येषां मित्रोदासीनशत्रूणां स्तुतिरेव । पण्डितोऽयं स्वाचारनिष्ठोऽयं शूरोऽयमित्यादिका प्रकाशते । न कदाचिन्निन्दाऽन्येषां द्विषतामपि न प्रकाशते, मित्रोदासीनानां न प्रकाशत इत्यत्र किं वाच्यमित्यर्थः । तेषामभ्युदयो महाभारते प्रोक्तः ।

द्विषतामपि ये दोषान्न वदन्ति कदाचन ।
कीर्तयन्ति गुणानेव ते नराः स्वर्गगामिनः इति ॥

क इव । तद्धितप्रत्यया यथा प्रशंसामेवाहुः । यथा प्रशंसायां रूपप् ( पा० सू ५।३।६६ ) प्रशंसार्थे वर्त्तमानात् प्रातिपदिकात् स्वार्थे रूपप् प्रत्ययो भवति । प्रशस्तो वैयाकरणो वैयाकरणरूपः । तथा सस्नौ प्रशंसायाम् ( पा० सू० ५।४।४० ) प्रशंसोपाधिकेऽर्थे वर्त्तमानान् मृच्छब्दात् सस्न इत्येतौ प्रत्ययौ भवतः स्वार्थे । रूपपोऽपवादः । प्रशस्तामृत् मृत्सा मृत्स्ना । तथा वृकज्येष्ठाभ्यां तातिः ( पा० ५।४।४१ ) वृकतातिः । प्रशस्तो ज्येष्ठो ज्येष्ठतिः; ज्येष्ठतातिः ।

एवमेतैः सूत्रैर्विधीयमानाः स्वार्थिकत्वात् प्रकृत्यर्थविशेषणीभूतां प्रशंसां प्रकाशयंस्तद्धितप्रत्यया यथा परिमिता एवैवं सन्तोपीत्यर्थः ।

ननु रूपादाहृतप्रशंसयोर्यप् ( पा० ५।२।१२० ) इति रूपशब्दाद्विधीयमानो यबपि प्रशंसां बोधयति । स कुतो नात्र गणित इति चेत् । सत्यम् । उदाहरणे रूप्य इत्येतस्मात् यथा प्रशंसार्थः प्रतीयते, एवमाहृतोऽर्थोऽपि प्रतीयत इति नियतप्रशंसाप्रकाशकत्वाभावात् ।

नन्वत्र प्रशंसाप्रकाशकत्वं प्रकृतेरेवास्ति, न तु तद्धितप्रत्ययस्येति तद्दृष्टान्तीकरणमयुक्तमिति चेद्-उच्यते । प्रकृत्यर्थविशेषणपक्षे प्रकृतिरनुगृहीता भवति द्योतकत्वात् । प्रत्ययोऽप्नुगृहीत इति भाष्यकृन्मतमाश्रित्य तद्धितप्रत्ययो दृष्टान्तत्वेनोक्तः ॥ २४ ॥

अथेतरामार्यथाह—

**त्रिभिरभितोऽपि प्रथितो धीरः कलयन् सदा सदादेशम् ।**
**कालोचितोक्तियुक्तः स जयति सुजनो लकार इव ॥ २५ ॥**

स प्रसिद्धः सुजनः साधुर्जयति । सर्वोत्कर्षेण वर्त्तते । कीदृशः । त्रिभिर्विद्याविनयानुष्ठानाख्यैः कर्मभिरभितः सर्वत्र प्रथितः ख्यातः तथा धीरः धियं सद्बुद्धिमीरयति जनयत्यन्येषामित्यर्थः । यद्वा धियं सद्बुद्धिं रात्यंगीकरोति । पुनः सदा सर्वकालं सदादेशं सतां मन्वादिस्मृतिकर्त्तृणाम् । श्रुतिस्मृत्युक्त मार्गमनुतिष्ठतामिदानीन्तनानां वा आदेशमाज्ञां कलयन्नङ्गीकुर्वाणः । पुनः कालोचितोक्तियुक्तः । काल इत्युपलक्षणम् । देशकालोचितम् । देशो वाराणस्यादिः । कालो विवाहादिर्धर्मानुष्ठानरूपो वा । तत्रोचितायां योग्यतायामुक्तौ वचने युक्तः वक्तुं कुशल इत्यर्थः । स क इव । लकारो लडादिरिव जयति । तत्पक्षे कीदृशः । त्रिभिर्भावकर्मकर्त्तृभिरर्थैरभितः व्याकरणशास्त्रे प्रसिद्धः । तथा सदा धियं स्वार्थबोधं रात्यन्येषां जनयतीति धीरः । तथा सदादेशं तौ सदिति ( पा० सू० ३।२।१२७ ) सत्संज्ञकं शतृशानजमयमादेशं लटः शतृशानचावप्रथमासमानाधिकरणे ( पा० सू० ३।२।१२४ ) संबोधने च (पा० २।३।४७) इत्यादिना कलयन्ननुभवन् तथा कालो वर्तमानभूतभविष्यद्रूपे उचिताः या उक्तयः वर्त्तमाने लट् ( पा० ३।२।१२३) । भवति । भूते ( पा० ३।२।८४ ) लुङ् । अभूत् ।

अनद्यतने भविष्यति लुट् । भविता । एवमन्येषां लकाराणां यास्तत्तत्कालोचिता उक्तयो विधयस्तेषु विधेयत्वेन युक्तः ॥ २५ ॥

अथ मर्यादागुणगौरवेण विलसतां सतां गुणाः केन वर्णयितुं शक्या इत्याशयेन तद्वर्णनसमाप्तिमभिप्रेत्य तदभिवृद्धिमेवाशासानो वृद्धिशब्दो-

च्चारणरूपं मङ्गलमरम्भे कृतमन्तेपि कुर्वन् दृष्टान्तमिषेण सिचि वृद्धिः (पा० सू ७।२।१) सूत्रमार्ययोपक्षिपति—

**त्यक्तानन्तविकारा दुर्वारा सन्ततं रिपुभिः ।**
**परहेतुकाभिवृद्धिः सिचीव वृद्धिः सतां भवतु ॥ २६ ॥**

पूर्ववर्णितामर्यादगुणवतां सतामभिवृद्धिरभितोवर्द्धनं क्रियाप्रधानोऽयं वृद्धिशब्दः । धनधान्यैश्वर्यसुतादिप्राप्तिरूपाभिवृद्धिर्भवतु । प्रार्थनायां लोट् वेति लोट् भूयादित्यर्थः । कीदृश्यभिवृद्धिः । त्यक्तेति । अन्तो नाशस्तद्रहिताः अनन्ताः, अजितेन्द्रियैर्दुरुच्छेदा इति यावत् । त्यक्तास्तादृशाः विकाराः काम-क्रोधादयो यस्यां विकारहेतौ सत्यपि तद्रहितेत्यर्थः ।

पुनः कीदृशी रिपुभिरिति ।

मृगमीनसज्जनानां तृणजलसन्तोषविहितवृत्तीनाम् ।
लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥

इति न्यायादसङ्गी रिपुभिः सततं सर्वकालं दुर्वारा निराकर्तुं अश-क्येत्यर्थः । एतेन दुर्जनसम्पदःकियत् कालमेव विलसन्त्यः शत्रुभिरुच्छेद्यंत एव, न तथा सतामीश्वरपरायणानाम् । तत्र हेतुमाह । परार्थसाधिता परार्थं निष्पादितायाः संपत्तेर्दुर्जनादपि भयं नास्तीत्यर्थः । उक्तं च भागवते वासुदेवेन ।

न कश्चिन् मत्परो लोके तेजसा यशसा श्रिया ।
विभूतिभिर्वाभिभवेद् देवोऽपि किमु मानुषाः ॥ इति ॥

अत्र दृष्टान्तः सिचीव वृद्धिरिति । अत्र वृद्धिशब्द आकारैकारौ काराणां संज्ञिनां वाचकः । सिचीत्युपलक्षणं परस्मैपदस्यापि । सिचि वृद्धिः परस्मैपदेषु (पा० सू० ७।२।९) । परस्मैपदे परे सिचि परत इगन्ताङ्गस्य वृद्धिः स्यात् । इयं वृद्धिर्यथा सतां साधूनां शब्दानामचैषीदलावीदित्यादी-नामुक्तविशेषणविशिष्टा भवति । कथं । त्यक्तेति ।

अन्तादन्योऽनन्तस्तस्य विकारोऽनन्तविकारस्त्यक्तोऽनन्तविकारो यया सा ।

अयमर्थः—अनिर्दिष्टस्थानिकत्वेन इको गुणवृद्धी (पा० सू० १।१।३) इतीक् पदोपस्थानादिकाचांगस्य विशेषणाद्विशेषणेन च तदन्तविधिरिती-गन्तस्यांगस्य वृद्धिरित्येवमर्थाश्रयणाद् अचियीद् अजिरायीदित्यादावलोऽन्त्य-

स्य ( पा० १।१।५२ ) इति परिभाषयान्तस्यैवेकारस्य वृद्ध्याख्यो विकारो न त्वनन्तस्येति भावः ।

ननु असिद्धं बहिरंगमन्तरङ्गे (परि० ५१) इति परिभाषातः सिज्मात्रापेक्षत्वाद् गुणोऽन्तरङ्गः बहिर्भूतपरस्मैपदपरसिजपेक्षत्वाद् बहिरङ्गा वृद्धिरिति जाते गुणे गमिगन्तं नास्तीति वृद्धिप्राप्तिरेव गगनकुसुमायमानेत्यत आह—दुर्वारेति । शत्रुणान्तरङ्गेणापि गुणेन बाधितुमशक्यत्यर्थः । अन्तरङ्गमपि गुणं सिचि वृद्धिर्वचनसामर्थ्याद्बाधते । न तु गुणस्तामित्यर्थः ।

यद्येवं न्यनुवीत् न्यधुवीदित्यादावुवङमपि वाधेत् । सत्यम् । गु स्तुतौ । धू विधूनने कुटाद्योरनयोः प्रत्ययस्य ङित्वे सति क्ङिति च (पा० सू० १।१।५ ) इति गुणप्रतिषेधवद् वृद्धिरपि स्वयं प्रतिषिद्धा सती नोवङ्बाधितुमुत्सहेत्ते नैर्वल्यात्तस्माद्यत्र सामर्थ्यं तत्रैव प्राप्तस्य बाधः कल्पनीयः ।

नन्वन्तरङ्गबहिरङ्गपरिभाषायाः सिचि वृद्धिर्बाधिका न कल्पनीया। कथमन्तरङ्गे गुणे कृते पश्चाद् बचनसामर्थ्यादचैषीदित्यादावेकारस्याहौषीदित्यादावोकारस्यानिकोऽपि वृद्धिर्भविष्यति । 'अबाधेनोपपत्तौ बाधो न न्याय्य' इति सदुक्तेः । अकार्षीदित्यादौ तु गुणरपरत्वे च वदव्रजहलन्तस्याचः ( पा० सू० ७।२।३ इति हलन्तत्वेन वृद्धिः सिद्धा । इको गुणवृद्धी (पा० १।१।३) इति इक् परिभाषा पुनर्मुख्यतया सार्वधातुकार्धधातुकयोः ( पा० सू० ७।३।८४ ) पुगन्तलघूपधस्य च ( पा० सू० ७।३।८६ ) इत्यादिसूत्रप्रवृत्तिकेषु उदाहरणेषु भवति च्योततीत्यादिषु । मृजेर्वृद्धिः (पा० सू० ७।२।११४) इति सूत्रप्रवृत्तिकेषु मार्ष्टीत्याद्युदाहरणेषु सावकाशा । एवं च न काचिदनुपपत्तिः संभवति ।

कथमौनयीत् अश्ववीदिति । अत्राप्यन्तङ्गत्वाद् गुणायादेशयोः कृतयोर्ह्यन्तक्षणश्वसजागृणिश्व्येदिताम् ( पा० सू० ७।२।५ ) इति यान्तत्वाद् वृद्धिप्रतिषेधस्य सिद्धत्वात् ।

न चैवमभैत्सीद, अच्छैत्सीदित्यादौ व्यञ्जनस्यापि वृद्धिः प्राप्नोत्यनिकि वृद्धिप्रवृत्तेस्तुल्यत्वादिति वाच्यम् । हलन्तलक्षणा वृद्धिस्तत्राधिका भविष्यति । नाप्राप्तायां तस्यामारम्भात् । यत्र तर्हि सा प्रतिषिध्यते अदेवीदित्यादौ नेटि ( पा० सू० ७।२।४ ) इत्यनेन तत्र व्यंजनस्य वृद्धिः प्राप्नोति । सत्यम् । नेटीत्यनेन हलन्तस्य या च यावती वृद्धिः प्राप्नोति वदव्रजेति (पा० सू० ८।२।३) वा सिचि वृद्धिः (पा० ७।२।९) इति वा सा सर्वापि बाध्यते । यद्येवमाचार-

क्विबन्तस्य गोशब्दस्यागवीदित्यादौ तर्हि सिचि वृद्धिः प्राप्नोतीति चेन्न। अत्राप्यन्तरङ्गत्वादवादेशे कृते हलन्तत्वाद् हलन्तलक्षणाया वृद्धेर्नेटीति ( पा० सू० ७।२।४ ) प्रतिषेधः। अतो हलादेर्लघोः ( पा० सू० ७।२।७ ) इतिवृद्धिविकल्पस्तु सिचि वृद्धेरिग्लक्षणत्वे सत्यपि भवति।

ननु तर्हि न्यनुवीत् न्यधुवीदित्यादौ क्ङिति च ( पा० सू० १।१।५ ) इति वृद्धिनिषेधोऽनिग्लक्षणत्वान्न प्राप्नोति। उच्यते। मास्तु प्रतिषेधोऽन्तरङ्गत्वादवङादेशो भविष्यति। इह तर्हि अतारीत्, असारीदित्यादौ व्यञ्जनस्य वृद्धिः प्राप्नोति। अत्रापि गुणे रपरत्वे च कृतेऽतोर्ल्रान्तस्य ( पा० सू० ७।२।७ ) इति सिद्धा वृद्धिः। इह तर्ह्यलावीद् अयावीदित्यादावन्तरङ्गत्वाद् गुणावादेशयोः कृतयोर्हलन्तलक्षणायाः नेटी ( पा० सू० ७।२।४ ) इति प्रतिषेधे अतो हलादेर्लघोः ( पा० सू० ७।२।७ ) इतिवृद्धिविकल्पः प्राप्नोति, इष्यते च नित्या वृद्धिः।

किंच चिजिप्रभृतिभ्यो धातुभ्यो यङ्लुगन्तेभ्यो लुङि अचेचायीत्, अजेजायीदित्यादावन्तरङ्गत्वाद् गुणायादेशयोः कृतयोर्यान्तानां नेटि वृद्धिप्रतिषेधः प्राप्नोति। अन्यच्च चिरि, जिरिहिंसायामित्यनयोर्धात्वोर्लुङि अचिरायीद् अजिरायीदित्यत्रापि पूर्ववद् वृद्धिप्रतिषेधः स्यात्तस्मादन्तरङ्गमपि गुणमेषा सिचि वृद्धिर्बाधते इत्येवं वक्तुं, युक्तं, न पुनरन्तरङ्गप्रवृत्तिमभ्युपेत्य वचनादनिकोपि वृद्धिर्भवतीति। अत एवैतदपवादिकां न सिच्यन्तरङ्गमस्तीति परिभाषां जगुः। ज्ञापकश्चात्र यस्मिनश्विग्रहणं न कर्त्तव्यमित्युक्तं तदेव। कथम् णिश्व्योर्लुङि, सिचि वृद्धिः प्राप्ता नेटि ( पा० सू० ७।२।४ ) इति न प्रतिषिध्यते हलन्तत्वाभावात्। न चान्तरङ्गत्तादत्र पूर्वं गुणो भवति सिचि वृद्धेरनवकाशत्वात्। यदि चात्र पूर्वं गुणः स्यात् तर्हि णिश्विग्रहणमनर्थकं स्यादन्तरङ्गत्वाद्। गुणायादेशयोः कृतयोर्यान्तत्वादेव वृद्धिप्रतिषेधस्य सिद्धत्वात्। तस्मादिदमेव णिश्विग्रहणं ज्ञापकं न सिच्यन्तरङ्गमस्तीति। असिद्धं वहिरङ्गमन्तरङ्गे (परि० ४६ ) इत्येषा परिभाषा सिज्विषये न प्रवर्त्तत इत्यर्थ इत्यास्तां प्रसक्तानुप्रसक्तचेति शिवम्।

**ज्योतिर्विद्वरनीलकण्ठविदुषः श्रीचन्द्रिकायास्तथा।**
**पुत्रेणाहिगवीप्रसारितधिया गोविन्दनाम्ना कृते॥**
**श्रीसम्याभरणस्य सुज्ञसुखदेऽल्पे रश्मिमालाभिधे।**
**व्याख्याने शशिभृत्पुरी वसतिनोल्लासो द्वितीयोऽगमत्॥**

●

# अथ तृतीय उल्लासः

नीलकण्ठं बुधवरं नत्वा गौविन्ददैववित् ।
खलनिन्दाख्यमुल्लासं व्याख्याति विदुषां मुदे ।। १ ।।

तत्र शिखरण्याख्येन प्रथमवृत्तेन दुर्जननिन्दामाह—

**स्वभावादेवैकः कलयति सदा साधुवचनम्,**
**स्वभावादन्यस्मिन्नपि न सहते यत्तदपरः ।**
**समानेप्याकारे खलसुजनयोर्भेदकमिदम्,**
**ततो नैतो तौल्यं भजत इह किं तद्धितयते ।। १ ।।**

एतौ खलसुजनौ खलु निश्चयेन ततो हेतोस्तद्धितयतोस्तद्धिताः ( पा० ४।१।७६ ) इत्यधिकारसूत्रं विधाय विहितयोर्यत्प्रत्यययोस्तौल्यं साम्यं किं न भजतोऽपि तु भजत एव । ततः कुतः । यतो हेतोरुभयोराकारे शरीराकारे समाने तुल्येपि सतीदं खलसुजनयोर्भेदकमव्यावर्त्तकमस्ति । इदं किम् । यदेकः सुजनः स्वभावादेव सदा प्रसन्नताकाले क्रोधकाले च साधुहितं वचनं कलयति ब्रूते । शत्रुष्वप्यप्रियं न वक्तीत्यर्थः ।

अपरो दुर्जनः स्वभावादेवान्यस्मिन्नप्यन्योदीरितमपि तत्साधुवचनं न सहते सकोपमाकर्णयति । स्वयं त्वशुभमेव वक्ति अन्यदीयमपि शुभं वचः सोढुं न शक्नोतीत्यर्थः । यथा कर्मण्यः, सतीर्थ्यः, इत्यत्र तद्धितयत्प्रत्यययोः तुल्येऽपि वर्णसाम्ये इदमेव भेदकमस्ति । किमिदं भेदकम् । उच्यते । कर्मण्य इत्यत्र कर्मणि साधुरिति विवक्षायां तत्र साधुरिति तत्र सप्तमीसमर्थात् साध्वर्थे विधीयमानो यत्प्रत्ययः स्वभावात् विधिवशात् साधुवचनं साध्वर्थाभिधानमङ्गीकरोति । सतीर्थ्य इत्यत्र तु समानतीर्थे वासीति ( पा० ४।४।१०७ ) समानतीर्थशब्दात् सप्तमी समर्थाद्वासीत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । समाने तीर्थे गुरौ वासी सतीर्थ्यः सहाध्यायी । तीर्थे ये (पा० ६।३।८७) इति समानस्य सभावः । अयं च यत्प्रत्यय साध्वर्थस्य निवृत्तत्वादन्यस्मिन् वासीत्येतस्मिन्नर्थे विधीयमानो यत्प्रत्ययः स्वभावाद्विधिबलात् साधुवचनं साध्वर्थं न सहत इत्यर्थः ।। १ ।।

अथ गीत्यार्यया खलनिन्दामाह—

**अहितार्थैरपि साधुस्त्व इवानेकैः सदा समाविशति।**

**इतरो यवादि यदिव प्रणयं सहते न तद्धितेनापि ॥ २ ॥**

साधुः पवित्रो ब्राह्मणादिरनेकैर्बहुभिरहितमनिष्टमर्थयन्ति वाञ्छन्ति। तैरहितार्थैं शत्रुभिरपि सदा सर्वकालं समाविशति मैत्र्यैकत्रावस्थितिमेति। अतएवास्य साधुत्वम्। उक्तञ्च।

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः।

अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ इति ॥

क इव त्व इव। यथा तस्य भावस्त्वतलौ ( पा० सू० ६।१।११९ ) तस्येति षष्ठी समर्थाद् भाव इत्येतस्मिन्नर्थे त्वतलौ स्तः। शब्दस्य प्रवृत्तिनिमित्तं भावः। अश्वस्य भावोऽश्वत्वम्। अश्वता। आ च त्वात्। ( पा० सू० ५।१।१२० ) ब्राह्मणस्त्वः ( पा० ५।१।१३६ ) इति त्वसंशब्दनात् प्राक् यान्प्रत्ययानित ऊर्ध्वमनुक्रमिष्यामस्त्वतलौ तेऽपि चाधिकृतौ वेदितव्यौ। ब्राह्मणस्त्वः ( पा० सू० ५।१।१३६ ) होतृवाचिनो ब्रह्मशब्दात्त्वप्रत्ययः स्यात्। होत्रादिभ्यश्छः ( पा० सू० ५।१।१३५ ) इति छस्यापवादः। ब्रह्मणो भावो ब्रह्मत्वम्। छो नेति वक्तव्ये त्वग्रहणं तलोबाधनार्थम्। जातिपर्यायात्तु ब्रह्मशब्दात्त्वतलौ भवत एव। एवं स्थिते तस्य भावः (पा० सू० ६।१।१७९ ) इति त्वप्रत्ययोऽपवादः। सभावे सार्थेन आ च त्वात् (पा० सू० ५।१।१२०) इति वचनेन ब्राह्मणस्त्वः इति त्वशब्दपर्यन्तैः पृथ्वादिभ्य इमनिज्वा (पा० १।१२२) वर्णदृढादिभ्यः ष्यञ्च ( पा० सू० ५।१।१२३ ) इत्येवमादिभिर्बहुभिः प्रत्ययैर्हितार्थरहितैरपिं समावेशं भजते। त्वइति तलोप्युपलक्षणम्। तेन पृथोर्भावः पृथुत्वम्। पृथुता प्रथिमेति। आग्रहणमिगन्ताच्च लघुपूर्वात् ( पा० सू० ५।१।१३१ ) इत्यण् समावेशार्थं पार्थवमिति। एवं शौक्ल्यम्। शुक्लिमा शुक्लत्वम्। शुक्लता इति।

नन्वधिकारादेव त्वतलोरिमनिजादिभिः समावेशो भविष्यति किम् आ च त्वात् (पा० सू० ५।१।११०) इति वचनेन। सत्यम्। सामान्यस्य विशेषो वाधको भवति। तक्रकौण्डिन्यन्यायेन तत्र विशेषविहितैरिमनिजादिभिस्त्वतलोर्बाधा मा भूदिति समावेशार्थमवश्यमारब्धव्यम् आ च त्वात् (पा सू० ५।१।१२० ) इति सूत्रम्।

इतर इति। साधोरितरः खलस्तद्धितेनापि खलहितकारिणापि तेन साधुना सह प्रणयं मैत्रीं न सहते नोपैति। किंवत्। यवादि यदिव। यवादिभ्यो विहितो यत् प्रत्ययस्तद्वदिव। यथा यवयवक-

षष्ठिकाद्यत् ( पा० सू० ५।२।३ )। एभ्यो यत्प्रत्ययः स्यात्। खञोपवादः। यवानां भवनं क्षेत्रं खञ्। धान्यविशेषवाचिभ्यः शब्देभ्यः षष्ठीसमर्थेभ्यो भवनेऽभिधेये खञ्प्रत्ययो भवति। यद्भवनं क्षेत्रं चेत्तद् भवति। मुद्गानां भवनं क्षेत्र मौद्गीनमिति। सोऽयं यत्प्रत्ययो विशेषविहितस्तद्धितेनापि खञा सामान्यविहितेन प्रणयं न सहते यावीनमित्यादिकं प्रयोगं न सम्पादयतीत्यर्थः॥ २॥

अथानुष्टुभान्यामाह—

**युक्तवद्व्यक्तिवचने लुबर्थ इव सज्जने।**
**लुगर्थं इव नैयत्ये स्वभावादेव दुर्जने॥ ३॥**

व्यक्तिः साध्वसाधुविवेकः। वचनं वाक्। युक्ते इति युक्तवत्। स्वार्थे वतिः। ते व्यक्तिवचने स्वभावादेव सज्जने। साधुलोके युक्ते उचिते स्तः। साध्वसाधुविवेक-मधुरभाषणे सज्जन एव जानाति। यथा पीयूषस्य परितोषदायित्वं स्वभावसिद्धम्। कस्मिन्निव लुबर्थ इव। लुप्संज्ञकप्रत्ययादर्शनार्थे इव। यया लुबर्थोदाहरणे युक्तवद्व्यक्तिवचने भवतः। कथं। पंचालस्य राज्ञोऽपत्यानि बहूनि इत्यत्र जनपदशब्दात् क्षत्रियादञ् ( पा० सू० ४।१।१६८ ) इत्यपत्यार्थे विहितास्याञः ते तद्राजाः ( पा० सू० ४।१।१७४ ) इत्यञस्तद्राजसंज्ञायाम्। तद्राजस्य बहुषु तेनैवास्त्रियाम् ( पा० सू० २।४।६२ ) इति लुकि। पंचालाः क्षत्रिया इति भवति। ततस्तेषां निवासो जनपद इति विवक्षायां तस्य निवासः ( पा० सू० ४।२।६९ ) इति सूत्रेण देशे तन्नाम्नि गम्यमाने यथास्वं प्रत्यय इत्यणो जनपदे लुव् ( पा० सू० ४।२।८१ ) इति चातुरर्थिक प्रत्ययस्य लुपि सति पंचालाभिधेयस्य जनपदस्य लिंगसंख्ययोः प्राप्तौ लुपि युक्तवद्व्यक्तिवचने ( पा० १।२।५१ ) लुपि सति प्रकृतिवल्लिगवचने स्तः। इत्यनेन प्रकृतिगतबहुत्वोक्तेर्जनपदे सत्यप्येकत्वे पंचाला जनपद इति बहुवचनमेव पंचालशब्दे भवति। एवञ्च गोदयोर्नदयोरदूभवो ग्रामो गोदौ। मधुराया अदूरभवो ग्रामो मधुरा। अनयोरुदाहरणयोरदूरभवश्च (पा० सू० ४।२।७०) इत्युत्पन्नस्य प्रत्ययस्याणः प्राग्वल्लुप्यनेन सूत्रेण सत्यपि ग्रामवाचित्वे प्रकृतिगतं द्वित्वं लिङ्गं च स्त्रीत्वरूपं क्रमेण भवति। अत्रैतत्सूत्रनिष्कर्षार्थंस्तु जीर्णग्रन्थेभ्योऽवसेयः।

लुगर्थ इति। दुर्जने असाधौ पुनस्ते व्यक्तिवचने साध्वसाधुविवेकमधुरभाषणे। एवं साधुवत् युक्ते समुचिते स्वभावान्न भवतः। यथा विषस्य दुःखदायित्वं स्वभावसिद्धम्। कस्मिन्निव। लुगर्थ इव। लुक्संज्ञकप्रत्ययादर्शनार्थे इव। कथं लवणेन संसृष्टा यवागूर्लवणा। अत्र लवणेन संसृष्टे ( पा० सू०

४।४।२२ ) इत्यर्थे लवणशब्दात् संसृष्टे (पा० ४।४।२२) इति प्राप्तस्य ठको लवणाल्लुक् ( पा० सू० ४।३।२४ ) इति लुकि सति लुपोऽभावात् प्रकृतिवल्लिगवचनेन भवतः । किन्त्वभिधेयवदेव स्यातामित्यर्थः ।। ३ ।।

अथान्यामाह—

**सतामिहैकवचनं पुनर्वस्वोरिव श्रुतौ ।**
**सतिष्ययोरिव तयोस्तद् द्वन्देनासतां तथा ।। ४ ।।**

इह संसारे सतां साधूनामेकमैकप्रकारकं वचनं सर्वेषां श्रुतौ कर्णे पततीति शेषः । प्रतारणामजानन् साधुरेकरूपमेव वचनं सदा वक्ति, न कदाचिदपि अन्यथेत्यर्थः । तत्र दष्टान्तः । पुनर्वस्वोरिव । यथा लोके पुनर्वसुशब्द एकद्विवहुवचनान्तः प्रयुज्यते । श्रवणः सकरः पुनर्वसुः इति । 'गां गताविव दिवं पुनर्वसू इति । पुनर्वसव इत्यादि । श्रुतौ वेदे पुनरेकवचनान्तः प्रयुज्यते । पुनर्वसुर्नक्षत्रमदितिर्देवतेति । छन्दसि पुनर्वस्वोरेकवचनमि ( पा० सू० १ २।६१ ) इत्यनुशासनबलात् ।

ननु तत्रान्यतरस्यामित्यनुवृत्तेर्द्विवचनान्तोप्यस्ति पुनर्वसूनक्षत्रमित्यपि वेदेऽस्ति । सत्यं । एकवचनान्तता साक्षाद्विधीयमाना श्रुतौ झटिति पतति द्विवचनान्तता तु पुनर्वस्वोर्द्विवाचकत्वादार्थिकीत्यर्थः । एतदिदानीमेव स्फुटं भविष्यति । असतां खलानां अधीरधियां तद् द्वन्द्वेन साधुप्रतिस्पर्धया नैकं वचनं भवति किन्तु स्वकार्यानुरोधान्नियमेनानेकप्रकारकं वचनमित्यर्थः । यथा सतिष्ययोस्तयोः । पुनर्वस्वोर्नक्षत्रद्वन्द्वे एकवचनं नैव भवति । उदितौ तिष्यपुनर्वसू दृश्येते ।

नन्वत्रैतेषां ब[१]हुत्वाद् बहुवचनमेव युक्तं न द्विवचनमिति चेद । उच्यते –तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ( पा० १।२।६३ ) । छन्दसीति निवृत्तम् । तिष्य एकः । पुनर्वसू च द्वौ । तेषां द्वन्द्वो वह्वर्थस्तत्र बहुवचने प्राप्ते द्विवचनं नित्यं भवति । न बहुवचनम् । अत्र तिष्यो असत्तुल्यो निष्पन्नः । नन्वनयोर्नक्षत्रत्वेन प्रसिद्धत्वात् पुनर्नक्षत्रग्रहणं तिष्यो माणवकः पुनर्वसू च माणवकौ तिप्यपुनर्वसवो माणवका इति न द्विवचनं भवतीत्येतदर्थः । तथा शब्दः पादपूरणे ।। ४ ।।

---

१. क्वचित् नन्वनयोर्द्वित्वाद्द्विवचनमेवभवितुं युक्तं नैकवचनमिति इति पाठः ।

अथान्यामाह—

**दुर्जनः सहतेऽन्यस्य नैकशेष इव श्रुतिम् ।**
**नेहतेऽन्यं विना वृत्तिं सुबन्त इव सज्जनः ॥ ५ ॥**

दुर्जनोऽन्यस्य साधोः श्रुतिं नामश्रवणमेव न सहते । परोत्कर्षासहिष्णुत्वात् तदीयपाडित्यादिगुणानुवर्णनं स्वकर्णपथविषयम् न करोतीत्यर्थः । क इव । एकशेष इव । सरूपाणामेकशेष एकविभक्तौ (पा० सू० १।२।६४; ।

सरूपाणां शब्दानां मध्ये एक एव सरूपः शब्दः शिष्यते इतरे सरूपा निवर्त्तन्ते एकस्यां विभक्तौ परतः । निवृत्तिमदवस्थानवाचित्वाच्छेषशब्दस्य। वृक्षश्च वृक्षश्च वृक्षौ । वृक्षश्च वृक्षश्च वृक्षश्च वृक्षाः अनयोरुदाहरणयोरवशिष्टो वृक्षशब्दोऽन्येषां वृक्षशब्दानां नामापि सोढुमसमर्थो यद्यपि तथापि यः शिष्यते स निवर्त्तमानार्थाभिधायीति द्विवचनबहुवचनोपपत्तिर्भवति । नेहत इति ।

सज्जनस्तु—"अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥" इति

न्यायादन्यं साधुमसाधुं वा स्वकीयं परकीयं वा विना वृत्तिं स्वशरीरनिर्वाहिकामपि जीविकां[1] नेहते नेच्छति । वृत्तिसंतोषितैरनेकैरपि सर्वकालं वेष्टित एव तिष्ठतीति भावः । क इव । सुबन्त इव । यथा सुबन्तः शब्दः सह सुपा (पा० सू० २।१।४) इति वचनात् समासवृत्तिमन्यं विना पदान्तरेण नेहते इत्यर्थः ।

ननु दार्ष्टान्तिकेनेकपरिवृत्तत्वमुक्तम् । दृष्टान्ते तु राजपुरुष इत्यादौ षष्ठीत्येकं सुबन्तमेकेन सुबन्तेन मिलितं सत्समस्यते । अनेकमन्यपदार्थे ( पा० सू० २।२।२४ ) इत्युक्तेः ।

सुप्सुपा ( पा० सू० २।१।४१ ) इत्यत्र श्रूयमाणैकत्वसंख्याया विवक्षितत्वात् सुबन्तपदद्वयेनैव समासवृत्तिरिति महद्वैषम्यम् । अतएव महत्कष्टं श्रित इति त्रिपदं वाक्यमेवावशिष्यते, नतु समास इति सत्यम् ।

यद्यपि तत्पुरुषेन संभवति दृष्टान्तस्तथापि अनेकमन्यपदार्थे (पा० सू० २।२।२४ ) इति वचनात् द्वन्द्वबहुव्रीह्योर्बहूनामपि पदानां समाससंभवाद

---

१. जीविका इतिक पुस्तके पाठः ।

दृष्टान्तोपपत्तिः। तथाहि बहुव्रीहौ तावत् नीलोज्ज्वलवपुः। नीलमुज्ज्वलं वपुर्यस्येत्यत्र वपुः शब्दो नीलोज्ज्वलशब्दौ मिलित्वा समासवृत्तिं विदधाति। तथा पूर्वशालाप्रियः। पंचगवधनः। अत्र प्रियधनशब्दौ पूर्ववद्द्रष्टव्यौ। कार्यश्च। पूर्वा शाला प्रिया यस्य, पंच गावो धनं यस्येति त्रिपदे बहुव्रीहौ तद्धितार्थोत्तरपदसमाहारे च ( पा० सू० २।१।५१ ) तद्धितार्थे विषये उत्तर-पदे च परतः समाहारे च वाच्ये दिक्संख्ये एकार्थेन समस्येते। इत्युत्तरपदे परतः पूर्वपदयोस्तत्पुरुषसमासं विधाय पूर्वशालाशब्दस्य प्रिया शब्दे उत्तरपदे सति स्त्रियाः पुंवद्भाषितपुंस्कादि ( पा० ६।३।३४ ) ति पुंवद्भावः प्राप्तः प्रियादित्वान्न भवति। तथा पंचगोशब्दस्य गोरतद्धितलुकि ( पा० सू० ५।४।९२) समासान्ते टचि टित्वान्ङीपि पंचगवीशब्दस्य धनशब्दे उत्तरपदे पुंवद्भावो भवति। तथा द्वन्द्वेऽपि होतृपोतृनेष्ठोद्गातार इति। अत्र द्वन्द्वे द्वयोर्द्वयोर्द्वन्द्वसमासे प्रतिद्वन्द्वमानङ्[1]। अतो द्वन्द्वे इत्युत्तरपदे विधीयमानः पूर्वस्यानङादेशप्रसंगः होता पोता नेष्टोद्गातार इति स्यात्। अनेकोक्तेर्यत्र बहूनां द्वन्द्वस्तादृशे समुदायद्वन्द्वे उद्गातृशब्दे उत्तरपदे नेष्टृशब्दस्यैवानङ् भवति नान्येषामिति सिद्धान्तः। अत्रोद्गातृशब्दः सुबन्तस्त्रयाणां पदानां समासवृत्तिं करोतीति दृष्टान्ते सार्थक्यम्। बृह[2]ट्टीकायाम् एतन्यद्यव्याख्यानं बहुपल्लवितमस्ति। तत्तत्त एवाऽवधार्यम्॥ ५॥

**साधुः करोतेरर्थं स्त्रींनधीते स्म यदन्तिमान्।**
**चतुरोऽर्थान् गंधनादीन् खलस्तदधिकस्ततः॥ ६॥**

अत्र संसारे खलो जनः साधोरपेक्षयाऽऽत्मानमधिकमेव मन्यते। तत्रेयं युक्तिरुच्यते। अर्थांस्त्रीनिति। गंधनावक्षेपणसेवनसाहसिक्यप्रतियत्न-प्रकथनोपयोगेषु कृञः ( पा० सू० १।३।३२ ) एष्वर्थेषु करोतेरकर्त्रभिप्राये क्रियाफले आत्मनेपदं स्यादिति सूत्रार्थः।

तत्र गंधनं परावद्यसूचनम्। अवक्षेपणं भर्त्सनम्। सेवनं परानुवृत्तिः। साहसिक्यं सहसा वर्त्तते साहसिकः। ओजः सहोंभसा वर्त्तते[3] इति ठक्। ठस्येकः। ( पा० सू० ७।३।५० ) साहसिकस्य कर्म साहसिक्यम्। कर्मणि ष्यञ्[4]। चौर्याद्यधर्म कर्म। तत्र खलः करोतेरेताश्चतुरोऽर्थान् सम्यगधीते

१. 'आनङृतो द्वन्द्वे' ( पा० ६।३।२५ ) इति सूत्रेणेति बोध्यम्।
२. कारिकाकर्तुरियं टीका समग्रा नोपलभ्यते।
३. अवद्यम् अवचनीयमित्यर्थः।
४. गुणवचनब्राह्मणादिभ्यः कर्मणि च ( ५।१।२४ ) सूत्रेणेत्यर्थः।

स्म। प्रतियत्नो सतो गुणान्तराधानम्। प्रकथनं प्रकर्षेण कथनम्। उपयोगो धर्मादिप्रयोजनो धनादिस्वीकारः। साधुस्त्वन्तिमान् करोतेस्त्रीनर्थानधीते स्म। लट् स्मे। (पा० सू० ३।२।११८) इति भूतेऽर्थे लट्। ततः कारणात्-खलस्तदधिकोल्पज्ञानसाध्वपेक्षया अधिकइति खलस्य महानुपहासः॥ ६॥

अथान्यां यथार्ययाह—

**यमिरिव गंधनवृत्तिः क्व खलो लुप्तानुनासिको सेट्कः।**
**गुणकारिणीं तितिक्षामृषिरिव सेट्को वहन् क्व सुधीः॥ ७॥**

खलः क्व, सुधीश्च क्वेत्यनयोर्महदन्तरम्। तदुच्यते। खल एतादृश.। गंधनं परावद्यसूचनं वृत्तिराजीविका यस्य। अतएवानुगतां वृद्धिं प्राप्ता नासिकाऽनुनासिका लुप्ताऽनुनासिका यस्य।

लोके हि निर्लज्जो लुप्तानुनासिक इत्युच्यते। पुनरसेट्कः। ईडनमीट् स्तुतिस्तत्सहितः सेट्कस्तु सः। न सेट् असेट्। असेडेवासेटकः। स्वार्थे कः निन्द्य इत्यर्थः। क इव। गन्धनवृत्तिर्यमिरिव। लुप्ताऽनुनासिकोऽसेट्कश्च भवति। यथा उदायत। यमेरा ङ्पूर्वकाल्लुङ्याङो यमहनः (पा० सू०-१।३।२८) इत्यात्मनेपदम्। तस्मिन् परतो जातस्य सिच आर्धधातुकस्येड्-बलादेः (पा० सू० ७।२।३४) इति इडागम एकाच उपदेशेऽनुदात्ताद् (पा० सू० ७।२।१०) इति न भवति। ततो यमो गन्धने (पा० सू० १।२।१२) गन्धनार्थे वर्तमानाद्यमः सिच् कित् स्यात्। आत्मनेपदेष्वंमतः (पा० सू०-२।४।४४) इति सिचः कित्वादनुदात्तोपदेशवनतितनोत्यादीनामनुनासिक-लोपो झलि ङ्किति (पा० सू० ६।४।३७)। इत्यनुनासिकलोपः। ह्रस्वाद-ङ्गादिति (पा० सू० ८।२।२७) सिचो लोपः। गंधनाभावे उदायंस्त कूपाद्-रज्जुमिति भवति। अत्र प्राक्सूत्रेण आत्मनेपदमकर्मकादित्यनुवृत्तेर्न भवति यद्यपि, तथापि समुदाङ्भ्यो यमोऽग्रंथे (पा० मू० १।३।७५) इति सकर्म-कार्थमात्मनेपदमुक्तम्। गंधनाभावे सिचः कित्वाभावादनुनासिकलोपाभावः। ह्रस्वान्तत्वाभावात् सिज्लोपाभावः।

सुधीः कीदृशः। गुणकारिणीं सर्वोपकारक्षमां तितिक्षां क्षमां वहन् सेट्कः स्तु स इति खलतो वैपरीत्यमस्य। क इव। मृषिरिव। यथा मृष-तिक्षायामिति धातोः परस्य निष्ठायां सेटि (पा० सू ६।४।५२) मृषस्ति-तिक्षायां मृषेर्धातोस्तितिक्षायां वर्त्तमानात् सेट्निष्ठा किन्न भवतीति कित्व-प्रतिषेधात् पुगन्तलघूपधस्य चेति (पा० सू० ७।३।८६) गुणे मर्षित इति

रूपं भवति । अत्र तितिक्षाभावे तु कित्वप्रतिषेधाभावान्न गुणो यथा अयमृषितं वाक्यम् विस्पष्टमित्यर्थः ॥ ७ ॥

अथान्यामाह—

**दुरात्मानः स्वभावेन महागुणवतामपि ।**
**आच्छादयन्ति विविधानशिदाकारवद् गुणान् ॥ ८ ॥**

दुरात्मानः खलाः महागुणवतां वंशपरम्परायां शास्त्राध्यापनाद्यनेकोत्कृष्टगुणसहितानामपि साधूनां केनापि राजादिससायां प्रकटितान् कयापि रीत्या गुणारोपेण दोषाच्छादनं विधाय वहुन् गुणान् प्रकाशयन्तीति तात्पर्यार्थः । तत्र दृष्टान्तः अशिदाकारवत् । अशिदाकार इव । इव शब्दो दृष्टान्तार्थः ।

यथा—आदेच उपदेशेऽशिति ( पा सू० ६।१।४५ ) उपदेशे एजन्तस्य धातोरेच आत्वं स्यादादि शितोऽन्यस्मिन् प्रत्यये विवक्षिते । अनिर्ज्ञातस्वरूपस्य स्वरूपज्ञापनायाद्य[1]मुच्चारणमुपदेशः । अनैमित्तिकमात्वं शिति तु प्रतिषेध इति सिद्धान्तः । देङ् पालने । दाता । शोऽतनूकरणे । शाता । ग्लै म्लै हर्षक्षये । ग्लाता । म्लाता । अत्र ओकारो गुणरूपः । ऐकारो महागुण[2] रूपः । एकारस्य द्विमात्रत्वे पूर्वस्याकारस्य वृद्ध्या महागुणत्वम् । 'सुग्लः, सुम्लः' इति पूर्वसूत्रेणात्वे आतश्चोपसर्गे ( पा० सू ३।३।१०६ ) इति कः । आतोलोप इटि च ( पा० सू० ६।४।६४ ) इत्यालोपः । सुग्लानं, सुम्लानम् इति । आतो युज ( पासू० ३।३।१२९ ) इति युच् भवति । अत्र ह्यशितित्युक्तेः पर्युदासपक्षाश्रयणेन शिद् व्यतिरिक्ते शित्सदृशे प्रत्यये तृजादौ परतो विधीयमानमात्वमेकारैकारौकाराणां गुणानामाच्छादकं जातमिति दृष्टान्तोपपत्तिः ।

ननु यदि पर्युदासपक्षाश्रयणमंगीक्रियते तर्हि 'सुग्लः, सुम्लः' इत्यादि प्रयोगानुपपत्तिः । तथाहि-सुष्ठु ग्लायति, म्लायति चेति सुपूर्वाभ्यां ग्लाम्लाधातुभ्यां परः प्रथमत एवातश्चोपसर्गे ( पा० सू० ३।३।१०६ ) इत्याकारान्तलक्षणः क प्रत्ययो न स्यात् । शिदन्यस्मिन्परे आत्वविधानाज्जातस्य च प्रत्ययस्य श्रवणेनानिष्टरूपप्रसंगः स्यात् । नैष दोषः । ह्वावामश्च ( पा० सू० ३।२।२१ ) इति ज्ञापकात् प्रथमत एव क प्रत्ययो भवति यदयम् स्वर्गह्वायः । तन्तुवायः । धान्यमायः । इत्येतेषु कर्मण्यणि ( पा० सू०-

---

१. अनिर्ज्ञातस्वरूपज्ञापकत्वमाद्यत्वमितियावत् ।

२ महागुणोवृद्धिरित्यनर्थान्तरम् ।

३।२।१ ) सिद्धेषु ह्वावामश्च ( पा० सू० ३।२।२। इति पृथक्सूत्रकरणमातो-नुपसर्गे कः ( पा० सू० ३।२।३ ) इत्याकारान्तलक्षणकप्रत्ययबाधनार्थं सदे-जन्तेभ्यः आकारान्तलक्षणं कप्रत्ययं ज्ञापयति । प्रसज्यप्रतिषेधेत्वेतद्दोषान्नु-न्मेष एकः । आदिशितोऽन्यस्मिन् प्रत्यये विवक्षित एवान्तरंगत्वादादावात्व-प्रलृप्तेः । एवं विपश्चिद्भिरत्रानेकानि दूषणान्युद्भाव्य समाधेयानि । प्रसज्य-पर्युदासयोर्लक्षणं व्याख्यानं च कैयटादिग्रंथेभ्योऽवसेयम् । शितीति किम् । 'ग्लायति, म्लायति' । अत्र शबस्ति । उपदेश इति किम् । चेता । स्तोता ॥८॥

अथान्यां पुनराह—

**स पुरस्कारमुचितं यतो याति स्थिति खलः ।**
**ङ्क्दिव क्षमते हन्त तस्यैव न गुणोदयम् ॥ ९ ॥**

खलो यतो यस्मात्साधुतः सकाशादुचितां देशकालोचितां सपरि-जनकुटुम्बनिर्वाहक्षमां जीविकां वृत्तिभूमिरूपां पौरोहित्यरूपां वा याति प्राप्नोति । तस्यैव तादृशोपकारकारकस्यैव गुणोदयं गुणानां पाण्डित्यादीनां उदयं क्वचित् केनाविगीयमानं, जात्यभिप्रायेणैकवचनम् । गुणोदयान् हन्त इति खेदे हर्षो वा न क्षमते सोढुं न शक्नोति, अन्यस्य का कथेत्यर्थः । हन्त हर्षेऽनुकम्पायां वाक्यारंभविषादयोरित्यमरः । क इव । ङ्क्दिव । ङ्क्त्प्रत्यय इव । यथा कित्प्रत्ययः चितः ङित्प्रत्ययः ब्रूते । गित्प्रत्ययः जिष्णुः । अत्र प्रत्ययः परश्चेति वचनात् ङ्क्त्प्रत्ययो यतो यस्याः प्रकृतेः स पुरस्कारं पुरोभागे उचितां योग्यां स्थितिमवस्थानं याति । स एव प्रत्ययः सार्वधातुकार्धधातुकयोरि ( पा० सू० ७।३।८४ ) ति पुगन्तलघू-पधस्यचे ( पा० सू० ७।३।८६ ) ति प्राप्तो गुणः ङ्क्तिच ( पा० सू०-१।१।५ ) कित्ङित् गिन्निमित्ते इको गुणवृद्धी न स्तः । इति वचनान्न भवति । उदयो वृद्धिस्तामपि । यथा मृष्टः । अत्र मृजेर्वृद्धि ( पा० सू०-७।२।११४ ) रिति प्राप्ताया वृद्धेर्निषेधः । अत्र गुणश्चोदयश्च गुणोदय-मिति समाहारद्वन्द्वः ।

कितीति निमित्तसप्तम्येषेति सिद्धान्तस्तेन लघूपधगुणस्याप्यत्र प्रतिषेधः । ङ्क्तीति गकारोपि चर्त्वभूतो निर्दिश्यत इति । तेन जिष्णुर्भूष्णु-रित्यत्रापि गुणनिषेधः । तत्र ब्रूते । मृष इत्यातिदेशिकं सार्वधातुकमपित् ( पा० सू० १।२।४ ) इति ङित्वम् । चित इत्यादौ स्वरूपेण कित्वं क्तप्रत्य-यस्य । जिष्णुरित्यादिष्वपि ग्लाजिस्थश्च ग्स्नुरि ( पा० सू० ३।२।१३९ ) ति सरूपेण गित्वम् । रुरुदिषेत्यादौ रुदविदेशातिदेशकमपि कित्त्वमस्ति ।

चङ्ङोस्तु स्वरूपङित्वयोरुदाहरणे। अशिश्रियत्। अत्र गुणे प्रतिषिद्धे इयङ्। अङित्वच्युतदित्यादि द्रष्टव्यम् ॥ ९ ॥

अथान्यामाह—

**याति प्रतिष्ठां भूयिष्ठामनुवृत्त्या यदीयया।**
**पदसंज्ञा भसंज्ञेव तं पुनर्बाधते खलः ॥ १० ॥**

खलो यदीयया साधु संबंधिन्याऽनुवृत्या सर्वदाऽनुसरणेन राजसभादौ भूयिष्ठामतिशयेन महतीं प्रतिष्ठां वहुद्रव्यप्राप्तिनिमित्तकोऽर्जितत्वं याति। तादृशोपि सन् स तं साधुं पुनः स्वावसरे बाधते पीडयति। का कामिव। भसंज्ञा पदसंज्ञामिव यथा बाधते।

कथम्। स्वादिष्वसर्वनामस्थाने (पा० सू० १।४।१७) इति पूर्वस्य प्रकृतिभागस्य पदसंज्ञा विहिता। ततो यचिभम् (पा० सू० १।४।१८) यादिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वस्य भसंज्ञा विहिता। तत्र पादशब्दस्य पद्दन्नोमासि (पा० सू० ६।१।६३) ति शसादौ पद्भावो विहितः। ततः शसादावज्झल्साधारण्येन स्वादिष्व-सर्वनामस्थाने (पा० सू० १।४।१७) इति यच्छब्दस्य पदसंज्ञायां जातायां झलां जशोऽन्ते (पा० सू० ८।२।३९) इति दत्वं प्राप्तं तथापि यचि भमिति (पा० सू० १।४।१८) शसादावजादौ विभक्तौ परतः स्वादिष्व-सर्वनामस्थाने (पा० सू० १।४।१७) इत्यनुवृत्तेरप्यजादेरस्य भसंज्ञापद-सञ्ज्ञाया आकडारादेका संज्ञा (पा० सू० १।४।१) इतिवचनाद्बाधिका जातेति जश्त्वं न भवति। दतः, दता इत्याद्यजादौ ज्ञेयम्। भ्यामित्वजादित्वाभावात् पदसंज्ञैवेति पदत्वाज्जश्त्वं भवति। दद्भ्यामिति हलादौ। एकसंज्ञाधि-कारादन्यत्र संज्ञानां समावेश इति सिद्धान्तः। तथा वेतस्वान् इत्यत्रापि कुमुदन-ड्वेतसेभ्यो ड्मतुबि (पा० सू० ४।२।८७) ति वेत्तस्शब्दात् ड्मतुपि डित्व-सामर्थ्यादभस्यापि टेर्लोपे मादुपधायाश्च मतोर्वो यवादिभ्यः (पा० सू०-८।२।९) इति मस्य वत्वे स्वादिष्वसर्वनामस्थाने (पा० सू० १।४।१७) इति पूर्वस्य सकारान्तस्य वेतस्शब्दस्य पदसंज्ञायां ससजुषोरुः (पा० सू० ८।२।६६) इति रुत्वं प्राप्तम्।

तसौ मत्वर्थे (पा० सू० १।४।१९। तान्त सान्तौ शब्दौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे। इति भसंज्ञा पदसंज्ञाया बाधिकेति रुत्वाभावः। वेत-स्वानिति सिद्धम्। बहुवेतसो देश इत्यर्थः ॥ १० ॥

अथ पुनरन्यामाह—

**निमित्तं स्वप्रतिष्ठायां द्रष्टुं न क्षमते क्षणम् ।**
**अपत्यवर्जितमिव प्रत्ययं द्विगुवत् खलः ॥ ११ ॥**

खलः स्वप्रतिष्ठायां निमित्तं निमित्तकारणीभूतं गुर्वादिकं द्रष्टुं क्षणमपि न क्षमते । किं पुनस्तस्याभिवृद्धिमित्यर्थः । तथा च तस्याभिवृद्ध्या परितप्तो भवतीत्यत्र किं चित्रमिति भावः । कं कमिव । द्विगुवत् दिग्वाख्य-समासस्तन्निमित्तं द्विगुसंज्ञानिमित्तकमपत्यार्थवर्जितं प्रत्ययमणादिकं द्रष्टुं यथा न क्षमते । कथम् । अष्टासु कपालेषु संस्कृतः पुरोडाशो अष्टकपाल इत्यत्र तद्धितार्थोत्तरपदसमाहारे च ( पा० सू० २।१।५२ ) इत्यनेन तद्धित-विषयभूते संख्या समासः । संख्यापूर्वो द्विगुश्च ( पा० सू० २।१।५२ )। तद्धितार्थेत्यत्रोक्तस्त्रिविधः । संख्यापूर्वो द्विगु संज्ञः स्यादिति । ततः संस्कृतं भक्षाः ( पा० सू० ४।२।१६ ) । सप्तमी समर्थात् संस्कृतार्थे यथाविहितं प्रत्ययः स्याद् भक्षाश्चेद्वाच्याः स्युरिति सामान्यतोऽण् । द्विगौ विभक्तिलोपे च कृते द्विगोर्लुगनपत्ये ( पा० सू० ४।१।८८ ।

द्विगोर्निमित्तं यस्तद्धितोऽजादिरपत्यार्थरहितः प्राग्दीव्यतीयः प्रत्यय-स्तस्य लुक् श्यात् । तेनादिवृद्ध्यभावः । अष्टनः कपाले हविषीति ( पा० सू० १९२ ) वार्तिकेन पूर्वपदस्यात्वम् । अत्रापत्याधिकारादन्याधिकारोक्त-मणादिकं प्रत्ययं स्वनिमित्तकं द्विगुर्लुकालुप्तत्वाद् द्रष्टुमसमर्थः किं पुनस्तज्ज-नितामादिवृद्धिमिति द्विगोः खलसाम्यम् । अनपत्य इति किम् । द्वयोर्मित्रयो-रपत्यं द्वैमित्रिः । अत्रापत्यार्थेऽतइञ् ( पा० ४।१।९५ ) इतीञ् आदि-वृद्धिश्च ॥ ११ ॥

अथापरां गीत्यार्ययाह—

**स्थानासनादिरलं येनाऽभक्तोऽपि पालितो विगुणः ।**
**भवति निघातव्यसनेऽसन्निव तस्यापि सुट्कपूर्वं इव ॥ १२ ॥**

खलोऽभक्तोऽपि सेवामकुर्वाणोऽपि विगुणो मूर्खोऽपि येन साधुना स्थान मुपवेशनार्थं स्थलमासनं कार्पासजनितं मृदु आदिशब्देन भोजनादि तैरति-शयेन पालितोऽपि सत्कृतोऽपि सन् तस्यापि साधोरपि निघातव्यसने नितरां घातो यस्मिंस्तादृशे व्यसने दुःखे राजदंडादिरूपे सति असन्निव भवति, क्वापि निलीय तिष्ठति । मोचनाद्युपकारं न करोतीत्यर्थः । क इव । कपूर्वः सुडिव । यथा सुट्कात्पूर्वः ( पा० ६।१।१३० ) इत्यधिकारमंगीकृत्य संपर्युं-

पेभ्यः[1] करोतौ भूषणे (पा० ६।१।१३७) इत्यादिभिः सूत्रैः संष्कृषीष्ट, संस्क्रियत इत्यादौ विधीयमानः सुट् तादृश एव। कथम्। समुचितटित्वलिङ्-गोपपादितस्थानसंभवेपि कात्पूर्वं इत्युक्तेः ल्वतन्त्रमासनमादिशब्देन भूषणार्थकता। उपलक्षणत्वात् किरतौ लवने (पा० ६।१।१४०) हिंसायां प्रतेश्च (पा० ६।१।१४१) इति लवनाद्यर्थकता चेत्यादिभिरुपायैरलं पालितो मानितः सन्नत एवाभक्तो यदागमास्तद्[2]ग्रहणे गृह्यन्ते (परि० ११) इति न्यायनिरपेक्षो विगुणौ गुणरहितो गुणं न करोतीत्यर्थः। संस्कृषीष्टेत्यादौऋतश्च संयोगादेः (वा० ७।२।४३) ऋकारान्तात् संयोगादेर्धातोरुत्तरयोरिडागमो वा स्यादात्मनेपदेषु परतः। इति प्राप्त इडागमो न भवति। संस्क्रियत इत्यादौ हि गुणोर्त्तिसंयोगाद्योः (पा० ७।४।२९) अर्त्तेः संयोगादेरुकारान्तस्य च गुणः स्याद्यकि लिङि यकारादावसार्वधातुके च परत इति प्राप्तो गुणो न भवत्यभक्तत्वेन संयोगादित्वाभावात्।

अतएव कात्पूर्वग्रहणं सुटोभक्तत्वज्ञापनार्थमिति काशिका। तादृशः सुट् संस्कुरुते इत्यादौ तिङ्तिङः (पा० ८।१।२८) अतिङन्तात् पदात् परं तिङन्तं निहन्यते इति निघातः सुटा व्यवधानाद्यद्यपि न प्राप्नोति तथापि स्वरविधौ व्यंजनमविद्यमानवत् (परि० ७१) इति वचनादसन्नेव भूत्वा न निवारयति किन्तु करोत्येवेत्यर्थः ॥ १२ ॥

अथेतरामाह—

**विहन्ति तस्यैवादेशं यमाश्रित्य प्रवर्त्तते।**
**अविज्ञातोत्तमः शासेः शाभावेन समोऽधमः ॥ १३ ॥**

अधमोऽयं प्रभुमाश्रित्य प्रवर्त्तते लोके प्रतिष्ठया वर्त्तते। तस्यैव प्रभोरादेशमाज्ञां हन्ति न करोतीत्यर्थः। तथाऽवज्ञाता अपमानिता उत्तमा मानिताः पित्रादयो येन तादृशोऽधमः शासेर्धातोः शाभावेन समस्तुल्यो ज्ञेयः। यथा अङ्ग[3]चरेण शा हौ (पा० ६।४।३५) इति हि प्रत्ययमाश्रित्योपर्विहितः शासेः शाभावः स तस्यैवं हेरादेशं हुझल्भ्योर्हेर्धिः (पा० ६।४।१०१) इति विहितं धिभावमझलंतत्त्वापादनेन प्रतिबध्नातीत्यर्थः। एवं सत्यप्यसिद्धवद-

---

१. सूत्रे उपेति उत्तरसूत्रात् संगृहीतमिव दृश्यते। उपात्प्रतियत्नेत्यादि (६।१।१३८) उत्तरसूत्रम्।

२. यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते इति परिभाषास्वरूपम्।

३. अङ्गाधिकारे इत्यर्थः।

त्राभादि ( पा० ६।४।२२ ) त्यसिद्धवद्भावाद् भवत्येव धित्वम् । शाधीति रूपनिष्पत्यर्थम् ।

अतोऽसिद्धवदत्राभादिति ( पा० ६।४।२२ ) सूत्रप्रारम्भोऽपि सार्थकः एतत्सूत्रप्रत्याख्यानपक्षे शा हौ ( पा० ६।४।३५ ) इत्यत्र शास् हाविति पदच्छेदः ॥

शासः शास् भवति हौ परे । किमर्थमेतत् शास् इदङ्हलोः ( पा० ६। ४।३४ ) इत्युपधेत्वबाधनार्थम् ततो हुझल्भ्यो हेर्धिः ( पा० ६।४।१०१ ) इति धित्वम् । धि चेति ( पा० ८।२।२५ ) सलोपः । शाधीति सिद्धम् । धिसकारे सिचो लोपश्चकाद्धीति प्रयोजनमिति नाश्रीयते, किन्तु सकारस्यैव लोपः । चकाधीत्येव भवितव्यमिति । तत्र सिद्धान्तः । कीदृशः शाभावः । अवज्ञातोऽसंभावित उत्तम उत्तमपुरुषो भिधस्य रूपो येन तत्र परतः शाभावाविधानादिति केचित् ।

अपरे तु अवज्ञा उत्तमोन्तोदात्तो येन । छन्दसि शाधीत्यस्याद्युदात्तस्यापि दर्शनात् । तथाहि-शा हौ ( पा० ६।४।३५ ) इत्यनिदितां हलउपधायाः ङ्कितीति ( पा० ६।४।२४ ) निवृत्तमुत्तरत्र पुनः ङ्किद्ग्रहणात् । तथासति यद्यपि हि लोके सेर्ह्यपिच्च ( पा० ३।४।८७ ) इत्यपित्त्वात् कित्वमेवास्ति तथापि वा छन्दसीति ( पा० ३।४।८७ ) पित्वमपि हिशब्दस्यास्ति । तत्रापि शाभावोस्ति । तदा हेः पित्त्वादनुदात्तौ सुप्पितावि (पा० ३।१।४) ति धीत्यनुदात्तः ।

शा इत्यस्य धातुत्वादुदात्तत्वम् । अपित्त्वे तु सति शिष्टस्वरबलीयस्त्वमिति ( वा० ८०९ ) प्रत्ययाद्युदात्तत्वे नान्तोदात्तं शेषनिघातेनानुदात्तादि शाधीति पदमिति दिक् ॥ १३ ॥

अ[1]थान्यामाह—

**नित्योपकारकारिणमनुसारिणमपि खलो नियतम्**
**कुरुते पृथगुपसर्गं फलजनिकाले यथा धातुः ॥ १४ ॥**

खलो नित्यमुपकारकं सदा तदनुसारिणमपि साधुं राजसभादौ फलजनिकाले स्वाधीनदानप्रसंगकाले पृथक् कुरुते । नाहमिमं परिचिनोमि मूर्खो-

---

१. क्वचिन्न दृश्यते । तच्च लेखकप्रमादादिति बोध्यम् ।

ऽयमिति वक्तीत्यर्थः । कः कमिव । धातुर्भ्वादिः प्रादिकं तत्सन्निधानेन प्रभुत्वपराभवाद्युपकारकारिणं क्वचित्तदर्थानुसारिणसंभव इत्यु[२]पेत्येवमादिकमुपसर्गं लुङादिविषये अट् द्विर्वचनादिकाले पृथक्कुरुते । उपसर्गस्त्वड्द्विर्वचनादि कार्यभाजो न भवन्तीति । भूवादयो धातवः ( पा० १।३।१ ) इति क्रिया वाचिनां सतां धातुपाठपठितानामेव धातुसंज्ञोक्तेरिति सिद्धान्तात् ।

ननु कथं तर्हि सिसंग्राममयिषतीत्यादिष्वट्द्वित्वहलादिशेषत्वादिकं सोपसर्गस्य दृश्यत । इति चेत् । सत्यम् ।

संग्राम युद्धे इति चुरादौ षठितस्य संग्रामयतेरेव सोपसर्गात् प्रत्ययस्तस्यैव सोपसर्गस्याट् द्विर्वचनादिर्भवति नान्यस्य भवतीति नियमज्ञापनादिति सिद्धान्तः ।। १४ ।।

अथेतरामार्ययाह—

**उपकारमन्यविहितं विगुणोऽवगणय्य कर्म कर्त्तेव ।**
**विख्यापयति समन्तादात्मन्येवात्र कर्त्तृत्वम् ।। १५ ।।**

विगुणः खलोऽन्येन साधुना विहितमुपकारमवागणय्य किमनेन मे कृतमिति तिरस्कृत्य लोके समन्तादात्मनि स्वस्मिन्नेव कर्त्तृत्वं मयैव तत् स्वकार्यं साधितमिति विख्यापयतिं प्रथयति । क इव । कर्म कर्त्ता इव । यथा देवदत्त ओदनं पचतीत्यत्राधिश्रयणफूत्कारादि विक्लित्तिपर्यन्तो देवदत्तव्यापारोऽस्त्येव । यदा पुनः सौकर्य्यातिशयविवक्षायां देवदत्तव्यापारानपेक्षणात् पच्यते ओदनः स्वयमेवेति कर्मण एव कर्त्तृत्वं विवक्षितं तदा कर्म कर्त्ता भवति इति कर्त्तृव्यापारं न सहते ।

क्वचिल्लूयते केदारः स्वयमेवेत्यादिषु कर्म्युदाहरणेषु कर्त्तृव्यापारं न सहते कित्वात् । गुणमर्पि न करोति । अतएव विगुण उच्यते । यतः । कर्मवत् कर्मणा तुल्यक्रियः ( पा० ३।१।८७ ) इति कर्मवद्भावाद्यगात्मनेपदादि सिध्यति ।। १५ ।।

अथापरामाह—

**तद्धितेऽपि गुणोत्कर्षं सहते चेन्न निर्गुणः ।**
**तदन्तेनापि स कथं समतां लभतां ततः ।। १६ ।।**

---

२. इत्यमेत्येवमादिकम् इति क पुस्तके पाठः ।

निर्गुणः खलस्तद्धितेऽपि साधुहितकारिण्यपि गुणोत्कर्षं पाण्डित्यादिगुणाधिक्यं न सहते ततः । कारणात् खलस्तदन्तेनापि तस्मात् खलादन्येन नीचेन चाण्डालादिनापि समता तुल्यत्वं कथं लभतां प्राप्नोतु । अपितु न कथंचित्तादृशः खलश्चाण्डालादपि निकृष्ट इत्यर्थः ॥

अथश्लेषः ॥ लैगवायन इत्यत्र लिगोर्गोत्रापत्यमित्यर्थे नडादिभ्यः फगि ( पा० ४।१।९९ ) ति फक् तद्धितस्य योऽन्त्यस्तेन उपलक्षितः ककारोऽनुबन्धः सहलत्वादुदात्तादि गुणरहितोऽपि तादृशे तद्धिते परत ओर्गुण ( पा० ६।४।१४६ ) इति लिगुशब्दोकारस्य गुणरूपमुत्कर्षं सहते । क्ङिति च ( पा० १।१।५ ) इति चकारादिग्लक्षणयोरेव गुणवृद्धयोः प्रतिषेधात् । कित्त्वंत्वादिवृद्धया चरितार्थम् । ततो हेतोस्तादृशस्तद्धितः खलसाम्यं कथं लभतामपि तु न कथमपीति वैधर्म्यं दृष्टान्तः फस्यायनादेशः ॥ १६ ॥

अथान्यामाह—

**गुणप्रवृत्तोऽपि खलो नैव विश्वासमर्हति ।**
**स क्ङितीक्परिभाषेव फलतो हन्ति यद् गुणम् ॥ १७ ॥**

खलः साधुनिष्ठगुणप्रवृत्तोपि सद् लोकोक्तिसूचितसाधुगुणेषु विश्वासं साधावेते गुणाः संतीति प्रत्ययं नैर्वार्हति । परन्तु स खलः फलतः राजसभादावुपकारफलप्रारंभे यद्गुणं हन्ति दूषयतीत्यर्थः । केव । क्ङिति इक्परिभाषेव । यथा इको गुणवृद्धी ( पा० १।१।३ ) इतीयमिक् परिभाषा सार्वधातुकार्धधातुकयोः ( पा० ७।३।८४ ) इत्यादिष्वनिगव्यावृत्त्या गुणाय प्रवृत्ता सती गुणस्येग्लक्षणस्थानिकत्वं सम्पाद्य उपलक्षणत्वात् सिचि वृद्धिः परस्मैपदेषु ( पा० ७।२।१ ) इत्यादौ वृद्धेरपि । ततः क्ङिति गुणं (निषिध्य) फलतः परम्परया हन्ति क्ङिति च ( पा० १।१।५ ) तीग्लक्षणयोर्गुणवृद्धयोः प्रतिषेधादिति भावः ॥ १७ ॥

अथापरामार्ययाह—

**अपकारमेव सूते परिणामे निर्गुणैः कृतोपकृतिः ।**
**दीर्घो णिलोपबाध्यः कित्वाल्लब्धावकाशतया ॥ १८ ॥**

निर्गुणैः खलैः कृता साधोरुपकृतिः सा परिणामे कार्ये प्राप्ते अपकारमेव सूते । राजसभादौ प्रतिष्ठापुरःसरं दापयित्वा ततस्तं साधुमभिशापनमिषेण प्रतिष्ठां द्रव्यलुण्ठनं च कुर्वन्तीत्यर्थः । तत्र दृष्टान्तः । दीर्घ इवेति लुप्तोपमा। यथा चेतुमिच्छति चिचीषतीत्यादौ सनि यदि शेषत्वादिकं सोपसर्गस्य दृश्यत

इति चेत् सत्यम् । संग्राम युद्धे इति चुरादौ पठितस्य संग्रामयतेरेव सोपसर्गात् प्रत्ययस्तस्यैव सोपसर्गस्याट् द्विर्वचनादिर्भवति । नान्यस्य भवतीति नियमज्ञापनादिति सिद्धान्तः ।। १८ ।।

अथेतरामार्ययाह —

**उपकारमन्यविहितं विगुणोऽवगणय्य कर्मकर्त्तेव ।**
**विख्यापयति समन्नादात्मन्येवात्र कर्त्तृत्वम् ।। १६ ।।**

विगुणः खलोऽन्येन साधुना विहितमुपकारमवगणय्य किमनेन मे कृतमिति तिरस्कृतमिति तिरस्कत्य लोके समन्तादात्मनि स्वस्मिन्नेव कर्त्तृत्वं मयैव तत्स्वकार्यं साधितमिति विख्यापयति । अतः सार्वधातुकार्धधातुकयोः ( पा० ७।३।८४ ) इति गुणः प्राप्नोति । अज्झनगमां सनि ( पा० ६।४।१६ ) इति दीर्घश्च प्राप्नोति । तत्र यथा नित्यं दीर्घत्वं कृताकृतप्रसङ्गित्वात् परमपि गुणं बाधते । एवं ज्ञीप्सतीति । मारणतोषणनिशामनेषु ज्ञा ज्ञप मिच्चेति चुरादिपाठात् स्वार्थे णिचि अर्त्तिह्री (पा० ७।३।३६) त्यादिना पुकि मिर्ता ह्रस्वः ( पा० ६।४।९७ ) इति ह्रस्वस्तत इच्छा सन् । 'सनीवन्तर्द्धेति ( पा० ७।२।४९ ) इड्भावपक्षे आप्ज्ञापृधामीत् ( पा० ७।४।५५ ) इत्युपधेत्वम् । सन्यडोः ( पा० ६।१।९ ) इति द्वित्वे अत्र लोपोऽभ्यासस्यें ( पा० ७।४।५८ ) इत्यभ्यासलोपः । अत्र सनि परतो णिचो दीर्घो णेरनिटि ( पा० ६।४।५१ ) इति णिलोपश्च प्राप्नोति । तत्र नित्यं दीर्घत्वम् यया गुणं बाधते, एवं णिलोपमपि बाधेतेति दीर्घत्वस्यावकाशदानाय इको झल् ( पा० १।२।९ ) इति सूत्रमारम्भणीयम् ।

अस्यार्थः—इगन्ताद्धातोर्झलादिः सन् कित् । कित्वान्न गुणः ।

एवं सति चिचीषतीत्यादौ कित्वाल्लब्धावकाशतया दीर्घत्वं परत्वाण्णिल्लोपेन बाधितं सोऽयं कित्वस्यैव प्रसाद इति निर्गुणकित्वकृतावकाशदानरूपोपकार एव बाध्यतारूपमपकारं प्रसूत इति दृष्टान्तार्थः ।। १९ ।।

अथापरामाह—

**उच्चारिताः समुचितप्राप्तीर्निघ्नन्ति दुर्जनाः ।**
**प्रापकाः प्राप्त्ययोग्यानां टाबजादिपदं यथा ।। २० ।।**

इदं दानं कस्मै दातव्यमिति प्रश्नस्योच्चारणकारिताः दुर्जनास्ते समुचिता दानयोग्या ये सज्जनास्तेषां प्राप्तीर्लाभान्निघ्नन्ति विनाशयन्ति । प्राप्तावयोग्यानामनर्हाणां प्रापका दापयितारो भवन्ति । क इव । यथा टाबजादिपदं । यथा टापि टाब्विधावजादि पदमजायतष्टाबि (पा० ४।१।४)

त्यत्राजा बालेत्यादिषु जातिलक्षणो ङीष् । वयसि प्रथमे ( पा० ४।१।२० ) इति ङीष्प्राप्तिं स्वग्रहणसामर्थ्यान्निहन्ति । अन्यथा अद्ग्रहणेनैव सिद्धेऽजादिग्रहणमनर्थकं स्यात् ।

किंच वाचा निशा दिशेत्यादिङीष् प्राप्त्ययोग्यानां हलन्तानां हलन्ताद्वके इति वचनाट्टापः प्रापकं भवति । यद्येवं पंचाजी दशैडकी इत्यादयः कथं प्रयोगाः सिध्यन्तीत्येतत् पूर्वपक्षसमाधानादिकं महाग्रन्थेभ्योऽवसेयम् ।। २० ।।

अथान्यामाह —

**परस्यापि स्वसत्तातो निघातं बहुमन्यते ।**
**लसार्वधातुकस्येव दुर्जनो मुगिवागमः ।। २१ ।।**

दुर्जनः स्वसत्तातः स्वजीवितव्यादपि परस्य कस्यापि स्वातिरिक्तस्य निघातं पीडां बहु मन्यते । स्वजीवितमप्यनाहृत्यापि परपीडायै प्रवर्त्तत इत्यर्थः । कः कस्येव । मुगागमो लसर्वधातुकस्येव निघातं करोति । यथा ऽसौ पचमान इति स्वरितेत्वादात्मनेपदे ते परे शपि सत्याने मुग् ( पा० ७। २।८२ ) आने परेऽदन्ताङ्गस्य मुगागमः स्यादिति जातो मुम अकारान्तस्यांगस्य बहिर्भूततप्रत्ययस्य चापेक्षणाद् बहिरङ्गः सन् स्वासिद्धिमधरीकृत्य तास्यनुदात्तेतान्ङि दुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोः (पा० ५।१।१६६) । तास्यादीनां समाहारद्वन्द्वोऽयम् । तासेः अनुदात्तेतः ङितश्चाकारान्तोपदेशाच्च परं लसार्वधातुकमनुदात्तं भवति ह्नङि ङौ वर्जयित्वा । प्रत्ययस्वरापवादोऽयम् । इति वचनाद् अन इत्यस्य प्रत्ययस्याद्युदात्तत्वं बाधित्वा अनुदात्तापरपर्यायं निघातं विधत्त इति दृष्टान्तार्थः । द्वितीय इव शब्दोंऽघ्रिपू[1]रणार्थः । सूत्रोदाहरणानि काशिकायां ज्ञेयानि ।। २० ।।

अथेतरामाह —

**प्रदत्तासितरेणापि तास्यादिवदुदात्तताम् ।**
**लसार्वधातुकास्यैव नान्यस्मै क्षमते खलः ।। २२ ।।**

इमामन्योक्तिमन्यथाह – खलोऽन्येन केनापि विवेकवता कस्मैचिदप्यनर्हायाभ्युत्थानसम्मुखगमनाभिवादनादिभिः प्रदत्तां प्रकर्षेण दत्तामुदात्ततां महत्तां न क्षमते सोढुं समर्थो न भवतीत्यर्थः । अत्र दृष्टान्तः । यथा तृतीयप्रथमे आद्युदात्तश्च ( पा० ३।१।३ ) इत्यनेन सूत्रेण लादेशसार्वधातुकाय कर्त्ता आस्ते शेते । पचमान इत्यादिषु तृच् ।

---

१. पादपूरणार्थ इत्यर्थः

ते ते आन इत्यादिकाय प्रत्ययाय प्रदत्ता अनुदात्तता तां स्यादिरिव तास्यनुदात्तेन्ङिददुपदेशात् ( पा० ६।१।१८६ ) इति प्रागुक्तं सूत्रं सोढुं न किन्त्वनुदात्तमेव विदधाति । प्रत्ययस्वरापवादत्वात्तस्येति सिद्धान्तितम् प्राक् । अत्रापीव शब्दः पूर्ववत् ॥ २२ ॥

अथान्यां दश डपजातिकयाह—

**ह्रानिः क्षमायां फलमक्षमायां न यद्यपि स्वस्य तथाप्यसाधुः ।**
**आमन्त्रितस्येव पदं तिङन्तं समुन्नतिं न क्षमते परस्य ॥ २३ ॥**

क्षमायां सहिष्णुतायां स्वस्यात्मनो द्रव्यस्य वा ह्रानिः फलमस्ति, अक्षमायां त्वसहनशीलतायां किमपि फलं न कोप्यर्थः । राजसभायां दानादिप्रसंगे असाधुः खलः क्षमावांश्चेदनक्षरत्वात्तस्मै कोऽपि ददाति । मह्यं न दीयते इति क्रोधोद्दीपनवांश्चेत्तदा सुतरां फलं न बर्हिनिष्कासनं चाधिकमपि । यद्यपि जानानोऽसाधुस्तथापि परस्य स्वस्माद् भिन्नस्य पंडितस्य साधोः समुन्नतिमयमसन्तं वैदिकः पण्डितश्चेत्येवमादिकां विशिष्टशिष्टकृतां दानयोग्यपात्रतारूपां समुन्नतिं महत्तां न क्षमते । सोढूं न शक्नोति । किन्तु स्वयमनेकप्रयासमात्रफलामप्यलीकदोषाविलवचोविलासैरपनयतीत्यर्थः । किं कस्येव । तिङन्तं पदमामन्त्रितस्यैव । यथा पचसि देवदत्तेत्यत्र पचसीति सुप्तिङन्तं पदम् ( पा० १।४।१४ ) इति तिङन्तत्वात् पदसंज्ञमस्ति देवदत्तेति सामन्त्रितमि ( पा० २।३।४८ ) त्यामन्त्रितसंज्ञस्यामन्त्रितस्य च आमन्त्रितस्यादिरुदात्तो भवतीति षाष्ठिकेन सूत्रेण दे इत्येकारस्योदात्तत्वमन्येषां त्रयाणामचामनुदात्तं पदमेकवर्जम् ( पा० ६।१।१५८ ) इत्यनुदात्तता । तत्र पचसीति प्रश्नसाक्षेण देवदत्तेन व्यपेक्षारूपं सामर्थ्यं पदविधित्वादासाद्याष्टमिकेनामन्त्रितस्य च ( पा० ८।१।१९ ) । पदात् परस्यापादादौ स्थितस्यामन्त्रितस्य सर्वस्यानुदात्तो भवतीति सूत्रेण दे इत्येकारस्यानुदात्तत्ता संजन[1]नेन समुन्नतिमुदात्ततां निवारयतीत्यर्थः ॥ २३ ॥

अथान्यां प्रथमोपजातिकयाह—

**अविद्यमाना इव जायमाना यत्तत्रविघ्नन्ति परस्य कार्यम् ।**
**पूर्वोदितामन्त्रितततः खलैः किं किं तैः खलेभ्योऽधिगता कलेयम् ।२४।**

यद्यस्मात् खलाः अविद्यमाना इव क्वचिन्निलीयमाना इव जायमानाः संस्थिताः सन्तस्तत्र राजादिसभायां दानप्रसंगे परस्य साधोः कार्यं विघ्नन्ति । अविद्यमाना इव भूत्वा एतैः खलैः कार्यं नाशितमिति न कोपि

---

१. 'संजनेन' इति कः पाठः ।

ब्रूते न जानाति वा तथा विघ्नन्तीत्यर्थः । तत्र दृष्टान्तमन्योक्त्याह—खलैर्दुष्टैरियं कालादर्शननिदानभूतपरनिघातरूपाविद्यापूर्वोदितामन्त्रिततः पूर्वमादाबुदितादुच्चारितादामन्त्रिसम्बोधनपदादधिगताज्ञता किम् । अथवा तैः पूर्वोदिता[1]मन्त्रितैः खलेभ्यः इयं कलाधिगता किमिति प्रश्नः । यथा देवदत्त पचसीत्यादौ पूर्वमुच्चरितमामन्त्रितपदमामन्त्रितपूर्वमविद्यमानवदि ( पा० ८।१।७२ ) त्यतिदेशादविद्यमानमिव भूत्वा परस्य पचसीत्यादेऽस्तिङन्तस्य पदस्य तिङ्ङतिङ् ( पा० ८।१।२८ ) इत्यनुदात्तत्वं निघाताख्यं विहितं सप्तकाराकारस्य षाष्ठिकेन धातोरिति सूत्रेण विहितमुदात्तत्वं विहन्ति ॥२४॥

अथान्यामाह--

**समानाधिकरण्येन नयन्तो नीचतां परम् ।**
**प्रथमामन्त्रितप्रख्याः सामान्यवचनाः खलाः ॥ २५ ॥**

खलाः एतादृशाः सन्ति । कीदृशाः । परं साधुं सामानाधिकरण्येन समानमधिकरणम् अवस्थानं तद्भावेन आत्मना सह समानयानासनसंवासादिसेवित्वेन नीचत्वं प्रापयन्तः । पुनः कीदृशाः सामान्यपकृष्टान्यश्लाघनीयानि वचनानि येषां ते गालिप्रदानतत्परा इत्यर्थः । अथवा अमान्यान्यनर्हाणि वचनानि तैः सह वर्त्तन्ते सदाऽसभ्यवचन रहिताः । अथवा अमान्यानि वचनानि येषां ते तैः सहिताः । अथवा सामवचनं मृदुवचनं ततोऽन्यत्कठिनं वचनं येषां ते सामान्यबचनाः । व्याकरणीयदृष्टान्तविशेषणमाह—प्रथममामन्त्रितं सम्बोधनपदं तत्प्रख्यागतत्सदृशाः, यथा-माणवक जटिलाध्यापके । सच माणवकशब्देऽग्रिमशब्दाभ्यां सह समानाधिकरणः सामान्यवचनश्च । एवं जटिलभ्यां शब्दोप्यध्यापकशब्देन समानाधिकरणः सामान्यवचनश्च । जटिलाध्यापकशब्दौ पूर्वापेक्षया विशेषवाचिनौ तत्र नामन्त्रिते समानाकरणे सामान्यवचनम् ( पा ८।१।७३ ) अविद्यमानस्य प्रतिषेधः आमन्त्रितान्ते समानाधिकरणे पदे परतः पूर्वमामन्त्रितांन्तं सामान्यवचनं नाविद्यमान वद् भवति किन्तु विद्यमानवदेव इति पूर्वपदस्य विद्यमानत्वादुत्तरपदस्यानुदात्ततैव भवतीति । अस्मिन् पक्षे नीचतामनुदात्ततां नीचैरनुदात्तः ( पा० १।२।३० ) इति तल्लक्षणात् । अस्यार्थः ताल्वादिषु भागवत्सु स्थानेषूच्चैभागे उच्चार्यमाणोऽच उदात्तसंज्ञः स्यात् ॥ २५ ॥

अथापरामाह—

**सापवादाः प्रकृत्यापि कृतान्तोदात्तवेदनाः ।**
**समासोदात्तशास्त्रेण समानाः किन्न दुर्जनाः ॥ २६ ॥**

---

१. पूर्वं उदिता कथिता यै आमन्त्रिताः तैः ।

दुर्जनाः समासस्य (पा० ६।१।२२३) इति षाष्ठिकप्रथमान्तसूत्रविहितेन समासान्तोदात्तशास्त्रेण समानास्तुल्या किन्न स्युः, अपितु तुल्या एवेत्यर्थः। दुर्जनाः कीदृशाः। प्रकृत्या स्वभावेन सापवादा। अपवादो निन्दा। तत्सहिताः। परेषां अपवादान्नित्यं वदन्ति। स्वयं वाऽपवादैर्युक्ता इत्यर्थः। कृतान्तो यमस्तेन तस्माद्वोदात्ता महती वेदना पीडा येभ्यस्ते साधूनामिति शेषः। येषां ते इति वा। तेषामप्यस्वास्थ्यकाले मरणकालेऽपि वा यो च बाहुल्यान् महती वेदना भवति। 'कृतान्तो यमुनाभ्राता शमनो यमराड् यमः' इत्यमरः (अ० को० १।१।५८)। एवं समासान्तोदात्तशास्त्रमपि प्रकृत्या प्रकृतिस्वरेण 'बहुव्रीहौ प्रकृत्या पूर्वपदम् (पा० ६।२।१) इत्यादिना सापवादमतिक्रतमन्तोदात्तस्य वेदनं ज्ञानं येन तादृशं भवतीत्यर्थः।

यथा ब्राह्मणस्य समित् ब्राह्मण-समिदित्यादौ। ब्रह्मणोऽपत्यं ब्राह्मण इत्यणन्तं प्रत्ययस्वरेणान्तोदात्तम्। समिध्यतेऽनयेति समिदित्यत्र सम्पदादित्वात् करणात् क्विवन्तस्योत्तरपदस्य गतिकारकोपपदात् कृत (पा० ६।२।१३९)। गतेः कारकादुत्तरपदात् कृदन्तमुत्तरपदं तत्पुरुषे समासे प्रकृतिस्वरं भवतीत्यनेन कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते समासस्य (पा० ६।१।२२३) इति समासान्तोदात्तस्तदपवादो भवति नानापदस्वरस्यायमपवाद इति काशिकोक्तेः। तच्चान्तोदात्तत्वं स्वरविधौव्यंजनमविद्यमानवत् (परि० ८१) इत्युक्तेः। समिदित्यत्रेकारस्योदात्तता भवतीति सिद्धान्तः॥ २५॥

अथान्यामाह—

**त्रिजातः श्रवणानर्हः सदादेशतिरस्कृतः।**
**अनेकाख्यातशत्रुत्वं लकार इव दुर्जनः॥ २६॥**

दुर्जनो लडादि लकार इव लोके गीयते। कीदृशः। त्रिभ्यो जातास्त्रिजातः। द्वौ पितरौ माता चैका कुण्डो वा गोलको वेति संभावनीयो लोके। श्रवणे वेदाध्ययनादावनर्होऽयोग्यः 'श्रुतिः स्त्रीश्रवणं श्रव इत्यमरः' (अ० को० २।६।९४) श्रोतव्यानां वा श्रवणानर्हः। साधवोस्य नामापि कर्णेन न शृण्वन्ति। स सदा सर्वकालं देशेषु तिरस्कृतो लोकैरिति शेषः। सतां सत्पुरुषाणां साधूनां आदेशे तिरस्कृतः सदाज्ञाकरणेप्यनर्ह इति वा। अनेकैः सह आसमन्तात् ख्यातं शत्रुत्वं यस्य अनेकाख्यातशत्रुत्वं यस्येति वा सर्वजगच्छत्रुरित्यर्थः। अथ कीदृशो लकारः। त्रिजातस्त्रिषु भूतवर्तमान-

भविष्यत्कालेषु जातः । लुङ्[1] लङ् लिटो भूते विधीयन्ते । लट्[2] वर्तमाने लुट्[3] लृटौ भविष्यति । अन्ये[4] पुनर्लकारा अर्थविशेषेषु विधीयन्ते । अथवा भावकर्मकर्त्तृषु त्रिष्वर्थेषु जात इत्यर्थः, श्रवणानर्हः कुत्रापि व्याकरणशास्त्रे न श्रूयते । कुत इति विशेषणद्वयेनाह--तौ सत् ( पा० ३।२।१२७ ) तौ शतृशानचौ सत्संज्ञकौ स्त इति सत्संज्ञकाभ्यां शतृशानजादेशाभ्यां तिरस्कृतोऽदर्शनं प्रापितः ।

लटः शतृशानचावप्रथमासमानाधिकरणे ( पा० ३।२।१२४ ) इति लट आदेशौ शतृशानचौ । शत्रुवदादेशः । लृटः सद्वा ( पा० ३।३।१४ ) इति लृटोऽपि सदादेशो वा अनेकैराख्यातप्रत्ययैस्तिप्तस्झिसिप्थस्थमिप्वस्मस् तातांझथासाथांध्वमिड्वहिमहिङ् ( पा० ३।४।७८ ) इत्यष्टादशभिराख्यातं शत्रुत्वं यस्य । अनेकाख्यातानां शतृत्वं यस्मिन्निति वार्थः । लस्य स्थाने विधीयमानत्वात् तिपाम् । लकारस्तु तत्प्रवृत्तिमपेक्ष्य स्वयं नष्ट इत्यर्थः । षष्ठी स्थाने योगा ( पा० १।१।४९ इति वचनात् ।। २६ ।।

अथापरामार्यायाह—

**प्रीतिं परेण धत्ते विगुणोऽवगणय्य सत्कृतौ हेतुम् ।**
**क्त्वाप्रत्ययस्तथाहि व्रजनानान्तर्यमीरयति ।। २७ ।।**

विगुणो मूर्खो दुर्जनः सत्कृतौ सतः साधोः कृतावुपकारे साधुकृते सत्कारे वा हेतुं दौर्जन्येन साधुत्वेन वा मन्मान्यतामयं करोतीति कारणमवगणय्य तिरस्कृत्य दुष्टस्वभावत्वात् परेणानिर्ज्ञातकुलशीलेन प्रीतिं विधत्ते । तत्र दृष्टान्तः । तथाहि—भुक्त्वा व्रजसीत्यादौ कित्वात् गुणरहितः समानकर्त्तृकयोः पूर्वकाले ( पा० ३।४।२१ ) इति विहितः क्त्वा प्रत्ययः यथापुरोऽवस्थानरूपसत्कारे हेतुमपि भुजिक्रियामनादृत्य स्वासंबद्धव्रजनगतमानंन्तर्य्यमीरयत्यभिधत्ते न भुजिगतं पूर्वकालत्वादिकमित्यर्थः । एतत्तु नैय्यायिकशिरोमणेश्चिन्तामणिकारस्य मतमाश्रित्याभिधानम् । तन्मते हि भुक्त्वा

---

१. भूते ३।८।२४ सूत्राधिकारे, लुङ् ३।२।११०, अनद्यतने लङ् ३।२।१११ । परोक्षे लिट् । ३।२।११५ सूत्राणि वर्तन्ते ।

२. वर्तमाने लट् ३।२।१२३ सूत्रम् ।

३. भविष्यति गम्यादयः ३।३।२ । अत्र भविष्यतीत्यधिकृत्य लृट् शेषे च ३।३।१३ । अनद्यतने लुट् ३।३।१५ ।

४. लोट्, लिङ्, लृङः । तत्र लोटलिङौ द्विविधौ आशिषि विध्याद्यर्थेषु च । हेतुहेतुमद्भावे च लृङ् ।

व्रजतीत्यादौ भोजमानन्तरमेव व्रजतीत्यनुभवबलादानतन्तर्यमेव क्त्वा वाच्यं नपूर्वकालत्वं, नापि समानकर्त्तृत्वम्। नाप्युभयमिति। पाणिनिमते तु पूर्वकालत्वमेव क्त्वा वाच्यं व्रजनं तु स्वेच्छाकृतं भोजनानन्तरं प्रहरोत्तरमपि गम्यते न त्वनन्तरमेवेति संक्षेपः।

यद्यपि क्त्वा प्रत्ययो 'न क्त्वा सेट्' सेट्क्त्वा किन्न स्यादिति देवित्वेत्यादौ गुणकृत्तथापि बाहुल्याभिप्रायेण विगुणत्वोक्तिः।

अथान्यामार्ययाह—

**विजहाति हा विदूरात् तस्मादिह दुर्जनं सुजनः।**
**दीर्घत्वमिव णिलोपः सन्निहितं बाधते स यतः॥ २८॥**

तस्माद् दुष्टबुद्धित्वहेतोरिह राजसमाजे सुजनो दुर्जनं विदूराद्विजहाति। हा इति खेदादेव विजहातीत्यर्थः।

कुतः खेद इति यतः कारणात् स खलः सन्निहितं समीपस्थं सज्जनं बाधते पीडयति। दुष्टबुद्धित्वात्। कः किमिव। णिलोपो दीर्घत्वमिव। यथा प्राक् साधिते ज्ञीप्सतीत्युदाहरणे अज्झनगमां सनि (पा० ६।४।१६) इति सूत्रेण सनि परे सन्निहितं दीर्घत्वं णिलोपो बाधत इत्यर्थः। ननु कारणा हारणा इत्यादौ सावकाशो णिलोपो अनवकाशं सनि दीर्घत्वं कथं बाधितुं प्रवर्त्तते। न च चिचीषतीत्यादिरवकाश इति वाच्यम्। तत्रापि गुणप्राप्तेः प्राप्त्यन्तरावरुद्धं दीर्घत्वमस्ति।

उच्यते—इको झल् (पा० १।२।९) इति सनः कित्वाद् गुणाप्राप्तौ सावकाशं दीर्घत्वं परत्वात् लोपेन बाध्यत इति युक्तम्॥ २८॥

अथान्यामार्ययाह—

**इच्छन्ति नाच्छमतयो विगुण[1]च्छायामपि क्षणं यस्मात्।**
**कुटिरिव स कुटिलवचनो निकटीभवतोऽपि निर्गुणान् कुरुते॥२९॥**

अच्छा निर्मला मतिर्येषां ते साधवो विगुणस्य पाण्डित्यादिगुणरहितस्य खलस्य छायां प्रतिबिम्बं क्षणमेकमपि तस्मान्नेच्छन्ति तं नेच्छतीति किं वाच्यमित्यर्थः।

कुतः यस्मात्स खलः कुटिलानि मिथ्यादोषप्रदानि त्वं चौरः, पतितो वेत्यादीनि वचनानि यस्य सः निकटी भवतोऽपि स्वसमीपवर्तिनोऽपि

१. विगुणा इति क०।

साध्वादीन्निर्गुणान्[१] कुरुते। 'संसर्गजा दोषगुणा भवन्तीत्युक्तेः।' क इव। कुटिरिव। कुट कौटिल्ये कौटिल्यवाची कुटधातुरस्ति। कुटिता कुटितुम् कुटितव्यमित्यादिषु गाङ्कुटादिभ्योऽञ्णिन्ङित् (पा० १।२।१) गाङादेशात् कुटादेश्च परेऽञ्णितः प्रत्यया ङितः स्युः, ङित्कार्यकर्त्तारो भवन्तीत्यर्थः। तत्र कुटिरादिर्येषां ते कुटादयस्तेभ्य इति तद्गुणसंविज्ञानबहुव्रीहौ तस्यान्यपदार्थस्य गुणो यो विशेषणं तस्यापि कार्यित्वेन संविज्ञानात् स्वयमपि ङित्वातिदेशनिमित्ततया कुटिर्धातुर्गणरहितो भवन्नन्येषामपि पुट संश्लेषणे। कुच संकोचने इत्येवमादीनां धातूनामप्यादिभूत्वा तानपि [२]गुणरहितान् करोतित्यर्थः। उत्पुटितेत्यादि ॥ २९ ॥

अथान्यामाह—

**अनाकाश्रययोग्यस्य दुर्जनस्य युवोरिव व।**
**प्रसंगमपि दूरेण सत्कृत्यार्थी परित्यजेत् ॥ ३० ॥**

सत्कृत्यं समीचीनं शुभं कर्म सन्ध्यावन्दनादि अर्थयते कर्त्तुमिच्छुः साधुदुर्जनस्य दूरेण प्रसंगभाषणसहोपवेशनादिकं परित्यजेत्। कीदृशस्य नाकः[३] स्वर्गस्तद्विरुद्धोऽनाको नरकस्तदाश्रययोग्यस्येत्यर्थः। तदन्यतद्विरुद्धतदभावेषु नञ् वर्तते इत्युक्तेः। लौकिकभाषाश्रयणेन तु नाकशब्देन नासिकोच्यते तदाश्रययोग्यो न भवतीत्यर्थः। इतिजीर्णाष्टीकाकृत आहस्म। कस्येव। युवोरिव। युश्च वुश्चानयोः समाहारो यु[४]वुतस्य युवोः समाहारद्वन्द्वस्यैकत्वात् स नपुंसकम् (पा० २।४।१७) इति यु वुशब्दस्य नपुंसकलिंगत्वाद् वृद्धचौत्वगुणतृज्वद्भावेभ्यो नुम् पूर्वविप्रतिषेधेन (पा० ५०) इति वचनात् घेर्ङिति (पा० ७।३।१११) इति गुणं वाधित्वा नुम् प्राप्तः आगमशासनस्यानित्यत्वान्न भवतीत्यतो घेर्ङिति (७।३।१११) अथवा युना सहितो वुर्युवुस्तस्येति मध्यमपदलोपी समासः शाकपार्थिवादेराकृतिगणत्वात्। युवोः प्रत्यययोरिति वाक्यतात्पर्यार्थः।

दृष्टान्ते सत्कृत्यार्थी तौ सत् (पा० २।२।१२७) इति सत्संज्ञकेन प्रत्ययेन कृत्याः (पा० ३।१।९५) प्राङ् णमुल इति कृत्यसंज्ञकेन च प्रत्ययेन चार्थी। अर्थप्रत्यायनं कर्त्तुमिच्छुर्वैयाकरणो युवोरनाकौ (पा० ७।१।१) इति

---

१. गुणानौदार्यादीनित्यर्थः।

२. अत्र गुणपदं गुणादेश परम्। ङिति गुणो निषिध्यते इति भावः।

३. नाकः न विधते कं दुःखं यत्र इति विग्रहः।

४. 'समाहारे सौत्रं पुंस्त्वमिति 'तत्त्ववोधिनी।

सूत्रेणानाकादेशाश्रयाय स्थानित्वयोग्ययोर्युवुप्रत्यययोः प्रसंगं दूरेण परित्यजतीत्यर्थः। कारक इत्यत्र ण्वुल्तृचौ ( पा० ३।१।१३३ ) इति ण्वुल्। नन्दनः। नन्दिग्रहिपचादिभ्यो ल्युणिन्यच ( पा० ३।१।१३४ ) इति नन्द्यादिभ्योल्युर्विधीयते। एतौ ण्वुल्ल्यू कर्त्तरि कृत् (पा० ३।४।६७) इति वचनात् कर्त्रर्थे विधीयेते। तयोः पुनः क्रमेणानाकादेशौ क्रियमाणः। करिष्यमाण इत्यादौ सत्संज्ञकः। शानच् कर्मणि विहितस्तथा कार्यं हार्यं बाह्यमित्यादौ ऋहलोर्ण्यत् (पा० ३।१।१२४) इति ण्यत्प्रत्ययः स्तयोरेव कृत्यक्तखलर्थाः (पा० ३।४।७०) इति भावकर्मणोर्विहित इत्यर्थभेदात् परस्परसंबंधाभावः ॥ ३० ॥

अथान्यामार्ययाह—

**अपमानितादिवर्णा हीनाभ्यर्णा दुरात्मनां वृद्धिः।**
**उदितानन्तविकारा हलन्तचिह्नेव [1]बाधमायाति ॥ ३१ ॥**

दुरात्मनां दुष्टस्वभावानां पापिनां वृद्धिरैश्वर्यरूपा बाधं पापबाहुल्यान्नाशमायाति। कीदृशी। अपमानिता मानहीनाः कृता आदिवर्णा ब्राह्मणा यस्यां यया वा तथा हीना नीचवर्णाश्चर्मकारादयोऽभ्यर्णाः समीपवर्त्तिनो यस्याः सा तथा च उदिता उत्पन्ना अनन्ता अनेके विकाराः कामक्रोधादयः परद्रोहादयो वा यस्यां सा बाधं [2]बन्धनम् अनैश्वर्यादिरभिवृद्धा दुर्जना उत्तमानपमानयन्ति। नीचान् प्रणयात् स्वान्तिके स्थापयन्ति। कामादिविकारैरनिशं कलंकिताश्च भवन्तीत्यतस्तेषां वृद्धिः परमकारुणिकेश्वरेच्छया नश्यतीत्यर्थः। उक्तञ्च भगवद्गीतायाम्—

प्रवृत्तिं च निवृत्तिं च न जना विदुरासुराः।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः।
ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥
तानहं द्विषतः क्रूरान् संसारेषु नराधमान्।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥'' इति ॥

---

१. याधमेति क पु०।
२. दवं वधन इति क०।

दृष्टान्तमाह—हलन्तचिह्नेवेति । चिह्नं लक्षणं हलन्तलक्षणा वृद्धि-विशेषसूत्रैर्यथा बाधमायाति । तद्यथा वदव्रजहलन्तस्याचः ( पा० ८।२।३ )। एषामचः स्थाने वृद्धिः स्यात् परस्मैपदपरे सिचि । अवादीत् । अव्राजीत् । अयाक्षीत् अभैत्सीत् । हलन्तत्वादेव सिद्धे वदिव्रज्योर्ग्रहणमतोहलादेर्लघोः इति ( पा० ७।२।७ ) विकल्पं बाधित्वा नित्या वृद्धिर्यथास्यादित्येतदर्थम् कीदृश्यसौ । अकणीत् इत्यादावयमानितोवृद्धिनिमित्तत्वेनानाश्रित आदि-वर्णोऽकारो यया सा न तत्र हलन्तलक्षणा वृद्धिर्भवतीत्यादिवर्णस्यापमानः कृतः । किन्तु अतोहलादेर्लघोः (पा० ७।२।७, इति वैकल्पिकी वृद्धिर्भवत्येव । तथा हीनः स्वररहितोऽभ्यर्णः समीपस्थो हलन्तत्वाद्धलरूपो वर्णो यस्याः सा तथा । उदितः प्रोक्तो अजन्तस्यान्ताद्धलोन्त्यस्याचो विकारो वृद्ध्याख्यो यया सा । एतादृश्यसौ वृद्धिर्नेटि ( पा० ७।२।४ ) । इडादौ सिचि हलन्तस्य वृद्धिर्न स्यात् । अदेवीत् । अमोषीदित्यादौ बाधमायाति यथेत्यर्थः ।

नन्वराक्षीत् अत्यांक्षीदित्यादिषु कथं वृद्धिः । यावता येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यादित्येकेन वर्णेन हला व्यवधानमाश्रीयते नपुनरनेकेनेति

उच्यते—योगविभागोऽत्र क्रियते । वदव्रज्योरित्येको योगः तत्र अतोला-न्तस्येत्यत इत्यनुवर्तते । वदव्रज्योरतः स्थाने वृद्धिर्भवति सिचि परस्मैपदे परतः । ततोऽच् इत्यपरो योगस्तत्रांगेनाज् विशेष्यत । अंगस्याचो वृद्धिर्भवति सिचि परस्मैपदे । अयाक्षीदित्यादौ । तत्रैतद्धलग्रहणमतिरिच्यमानं सद्धलस-मुदायप्रतिपत्यर्थम् । तेनात्रापि वृद्धिर्भवति ।। ३१ ।।

अत्र कृतखलनिन्दामुपसंहृत्यप्रसङ्गादन्यदाह—

**लोलुवादाविवैतस्मिन् तस्मिन् गुणनिषेधके ।**
**अप्रवृत्तेपि का हानिर्महाजनतिरस्कृते ।। ३२ ।।**

पूर्ववर्णितगुणवत्पर्य्यन्ते ऽस्मिन् ग्रन्थे तृतीयोल्लासाख्ये । आधारसप्त-मीयम् । तत्र गुणनिषेधके निर्गुणोऽयं ग्रन्थ इति गुणानां प्रतिषेधं ब्रुवाणे खले दुष्टे सति तथैतस्य ग्रन्थस्य विगुणतामभिधाय अप्रवृत्तेऽपि पठनपाठनोद्योगार्थ-मनभियुक्तेपि । पुनः कीदृशे खले । अतएव महान्तः पण्डिताः सहृदयाः जनालोकास्तैस्तिरस्कृतेऽप्यस्माकं का हानिरपि तु न काचित् । परकीयप्रया-सविदुषान्तु करुणाया स्वत एवैतद्ग्रन्थप्रवृत्तेरनिवारणीयत्वादिति भावः । कस्मिन्निव । लोलुवादाविव लोलुवः । । पोपुवः । मरीमृजः । लूञ् छेदने पूञ् पवने । मृजूष् शुद्धौ । लू पू मृजू इत्यादिभ्यो यङ् । सन्यङोः ( पा० ६।१।९ )

इति द्विर्वचनं गुणो यङ्लुकोः (पा० ७।४।८२) इत्यभ्यासस्य गुणः। मृजेस्तु उरदत्वे हलादि शेषे (पा० ७।४।७०)। रीगृदुपधस्य च (पा० ७।४।९०) इत्यभ्यासस्य रीगागमः। एवं लोलुवादिभ्यो यङन्तेभ्यः पचाद्यचि कृते यङोचि च (पा० २।४।७४) इति यङ्लुकि तमेवाचमाश्रित्य सार्वधातुकार्धधातुकयोः (पा० ७।३।८४)। मृजेर्वृद्धिः (पा० ७।२।११४) इति गुणवृद्धी प्राप्नुतस्ते न धातुलोप आर्धधातुके (पा० १।१।४१) धात्वंशलोपनिमित्ते आर्द्धधातुके परत इको गुणवृद्धी न स्त इति वचनान्निषिध्येते।

ग्रन्थतुल्ये लोलुवाद्युदाहरणे खलु तुल्ये गुणवृद्धिनिषेधके सूत्रे प्रवृत्तेऽपि वा का हानिर्न कापि क्षतिः। प्रयोगसिद्धिः कथमिति चेत्। कीदृशे महाजनः सर्वोत्कृष्टो महाभाष्यकारस्तेन तिरस्कृते दूषिते प्रत्याख्यातत्वात्सूत्रस्य। कथम्। यङन्तेभ्यो लोलूयादिभ्य पचाद्यचि यङोकारस्य अतो लोपः (पा० ६। ४।६४) इत्यार्धधातुके परे अतो लोपस्ततो यस्य हल् इत्यवशिष्टस्य यकारस्य लोपः। ततस्तमेवाचमाश्रित्य गुणवृद्धी प्राप्नुतस्ते अचः परस्मिन्पूर्वविधौ (पा० १।१।५७) इत्यल्लोपस्य स्थानिवद्भावान्न भवतः। यथा पापचक इति। यङन्तात्पचेर्ण्वुल्। दीर्घोऽकितः (पा० ७।४।८३) इत्यभ्यासस्य दीर्घः। द्वितीयस्य पचेः अत उपधाया (पा० ७।२।११६) इतिवृद्धिः प्राप्ता कस्माद्धेतोर्न भवति। चिन्त्यमेतत्। न ह्यत्रानेन निषेधः सिध्यति। यत इक इत्यनुवर्त्तते तेनेग्लक्षणयोर्गुणवृद्धयोः प्रतिषेध इति सिद्धान्तः तत्र। नन्वेयं वृद्धिरिग्लक्षणेत्ययुक्तो दृष्टान्तः। किंच नैवेतेषु लोलूयादिष्वतोलोपो लभ्यते यङोऽचि च (पा०२।४।७४) इतिसमुदायलुका प्रतिपदविहितेन बाधितत्वात्। सत्यम्। योगविभागोऽत्र क्रियते अतो लोपो भवत्यार्धधातुके परतः। ततो यस्य य इत्यस्य समुदायस्य योऽकारस्तस्यापि लोपो भवत्यार्धधातुके। किमर्थमिदं विशेषविहितेन समुदायलुकातो लोपो मा बाधीति। ततो हलः। हल उत्तरस्य यकारस्य लोपो भवत्यार्धधातुके। एवं सत्यत्र आतो लोपस्य स्थानिवद्भावादेव गुणवृद्धी न भविष्यत इति सिद्धम्।

नन्वत्र यथैव गुणवृद्धी न भवत एवं चेक्षिप लोलुव स्तोष्टुव इति इयङुवङावप्यच प्रत्ययमपेक्ष्य न स्याताम्। उच्यते। अचमपेक्ष्य मा भूतामियङुवङौ य एव त्वसौ स्थान्यकारस्तदाश्रयौ भविष्यतः। स हि यकारे लुप्ते प्रत्ययसंज्ञकः।

नन्वेवं सर्वविधिभ्यो लुग्विधिर्बलवान् (परि० १०१) इत्युक्तसार्वधातुकयोर्दीर्घः (पा० ७।४।२५) तस्मात्प्रागेव यङो लुकि कृते स्थानिवद्भावे सत्यपि चेक्षि अ, अ तोष्टु अ अ इति स्थते स्थान्यकारेण सह लघूपधमंगं,

संजातमित्यच् प्रत्यये परतो गुणः स्यादेवेति चेन्न । अत्रान्तरङ्गावियङुवङौ भविष्यतः । यथा अशिश्रियत् । अदुद्रवदिति । तस्मात् स्थानिवद्भावादेव लोलुवादिसर्वमुदाहरणजातं सिद्धं नार्थं इकोगुणवृद्धी (पा० १।१।३) इत्यनेन सूत्रेणेति महाभाष्यकारमतम् । अत एवोक्तम् महाजनतिरस्कृति इति । अत्र पदमञ्जरीकारस्तु उच्यते इत्यादिना, ग्रंथेन युक्तियुक्तं तद्दूषणान्यभिधाय सूत्रं समर्थितवान् । संक्षेपप्रवृत्तेन मया नेहोपन्यस्तम् । सूत्रसमर्थनं महाभाष्यकारस्य ग्रन्थकर्त्तूरामचन्द्रभट्टस्य चासंमतत्वादिति शिवम् ।

**ज्योतिर्विद्वरनीलकण्ठविदुषः श्रीचन्द्रिकायास्तथा ।**
**पुत्रेणार्हिगवीप्रसारितधिया गोविन्दनाम्ना कृते ॥**
**श्रीसभ्याभरणस्य सुज्ञसुखदेऽल्पे रश्मिमालाभिधे ।**
**व्याख्याने शशिभृत्पुरीवसतिनोल्लासस्तृतीयोऽभवत् ॥ १ ॥**

इतिश्रीमद्विद्वद्दैवज्ञमुकुटहीरनीलकंठज्योतिर्वित्सूनुगोविन्दज्योतिर्विद्विरचितायां सभ्याभरणटीकायां रश्मिमालाभिधायां दुर्जननिन्दानामकस्तृतीय उल्लासः ॥

❁

# अथ चतुर्थ उल्लासः

**प्रणम्यैकदन्तं तथा नीलकण्ठं विधिज्ञाग्रगण्यं स गोविन्दसूरिः।**
**उदारप्रशंसाख्यमुच्छ्वासमल्पं चतुर्थं सतां तुष्टये व्याकरोति ॥१॥**

तत्रानुष्टुभोदारप्रशंसामाह—

**आत्मनेऽदसम्बंधिजादादेशविधानवत् ।**
**अनकारोत्तरस्पर्शि वदान्यवदनं सदा ॥ १ ॥**

वदान्यो बहुप्रदः। स्युर्वदान्यस्थूललक्ष्यदानशौडा बहुप्रदेइत्यमरः। (अ० को० ३।१।६)। तस्य वदनं मुखं सदा सर्वकालं। अनकारोत्तरस्पर्शि। नकारमेवोत्तरनकारोत्तरं तत्स्प्रष्टुं शीलमस्य तन्नकारोत्तरस्पर्शि। न नकारोत्तरस्पर्शि अनकारोत्तरस्पर्शि भवतीत्यध्याहारः। बहुप्रदस्यार्थिभिर्याच्यमानस्य मुखात् कदाचिदपि नकाररूपमुत्तरं न निस्सरतीत्यर्थः। तत्र शब्दश्लेषेण दृष्टान्तः। किं वत्। आत्मनेपदेत्यादिवत्। आत्मनेपदसम्बन्धीवासौ। कश्चात्मनेपदसंबंधिकस्तस्यात्मनेपदेष्वनत ( पा० ७।१।५ )[1] इति सूत्रेंण कृतादादेशविधानं तद्वत् तत्तुल्यमित्यर्थः। तदप्यनकारोत्तरस्पर्शि भवति। यथा सूत्रार्थस्तु आत्मनेपदेषु परतो योऽत्र नकारस्तस्यानकारान्तादंगादुत्तरस्य अदित्ययमादेशो भवति। चिन्वते। लुनते। कृतविकरणयोश्चिञ्लूञित्यनयोर्धात्वोरनकारान्तयोरनन्तरस्पर्शस्यादेशो विधीयते। सोयमदादेशोऽकारादुत्तरो योऽत्र शब्दस्तां स्पृशत्यादेशित्वेनांगीकरोतीत्यकारोत्तरस्पर्शी न अकारोत्तरस्पर्शी व्यवन्ते प्लवन्ते इत्यादिष्वकारान्तादंगादुत्तरस्य कदापि न भवतीत्यर्थः।

ननु व्यवन्ते प्लवन्ते इत्यत्रापि प्रागेव विकरणाच्छचः परत्वाददादेशः कस्मान्न भवति। अनत इत्यस्य तु वोमेद्यन्त इत्यादि रवकाश इति चेत् न। नित्यत्वादत्र विकरणे कृतेऽत्रान्तादेशेन भवितव्यमित्यदादेशो न भवतीति दिक् ॥ १ ॥

अथान्यामाह—

**तदीयमव्ययप्रेमपरिहायारुचिर्नञि ।**
**ल्यपोऽशिक्षि महोदारैर्गुण एव स तादृशः ॥ २ ॥**

---

१. सूत्रं इति क० ।

महोदाराणामुदारप्रकृतीनां नञि नकारे अरुचिरप्रीतिरस्ति। सा तैः कुतः शिक्षितेत्याशंक्य क्त्वादेशाल्ल्यपः सा तैर्महोदारैरशिक्षि।

ननु तस्मिन् ल्यबादेशे अव्ययप्रेमाप्यस्ति। तदपि तैः शिक्षितं स्यान्नेत्याह तदीयमिति। ल्यबादेशे यदव्ययप्रेमास्ति तत्परिहाय परित्यज्य।

अयमर्थः-उदारचरितास्तु मुखात् कदाचिदपि याचकयाञ्चावसरे नकारं न निस्सारयन्ति सततं तस्मिन् याचके व्ययो नाशस्तद्रहितं निर्भरं प्रेम कुर्वन्ति, न तु तद्धानिम्। ननु ल्यबादेशे द्वयमस्ति नञ्य[1] प्रीतिरव्ययप्रेम च। तत्रैकमंगीकृतमन्यत्त्यक्तं तत्र को हेतुरत आह—गुण इति। महोदाराणां विवेकिनां तादृशः प्रसिद्धो गुण एवास्ति यत्परगतं गुणमेव गृह्णन्ति नतु तद्गतमव्ययप्रेमरूपं दोष[2] मिति स्वाभाविकी तेषां व्ययशीलतैव शोभतेतरामित्यर्थः।

व्याकरणपक्षे। समासे नञ्पूर्वेक्त्वो ल्यपि (पा० ७।१।३७) इति अकृत्वा, 'अहृत्वा इत्यादौ क्त्वो ल्यबादेशाभावः नञ्पूर्वकत्वात् समासस्य। मूले परि[3] हायेत्यत्र नञ्पूर्वकत्वाभावात् क्त्वो ल्यबादेशोऽस्ति। क्त्वातोसुन्कसुनः ( पा० १।१।४० ) इति क्तान्तस्य प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्यग्रहणम् ( परि २३ ) इति परिभाषयाऽव्ययत्वं ल्यपस्तु स्थानिवद्भावात् तदन्तस्याप्यव्ययत्वं तत्रैव परमं प्रेमास्ति। ननु 'स्नात्वाकालकः, पीत्वा स्थिरक' इत्यत्राध्याहृतक्रियापेक्षत्वात् क्त्वा प्रत्ययः। सापेक्षत्वेऽपि मयूरव्यंसकादित्वात्समासे सति क्त्वो ल्यबादेशः कस्मान्न भवति। सत्यम्। मयूरव्यंसकादिगणे हि प्राकरणिकः समास एव निपात्यते इति न, किं तर्हि यस्य लक्षणं नास्ति तत्सर्वं निपात्यत इत्यर्थः।

ननु परिहायेत्यत्रान्तरं गत्वा जहातेश्च क्त्वि ( पा० ७।४।४३ ) इति हिरादेशः पूर्वं प्राप्नोति। ल्यप् तु समासाश्रयत्वात् बहिरंगः। सत्यम्। अदो जग्धिर्ल्यप्तिकिति ( पा० २।४।३६ ) इति ज्ञापकम्। लघुभूतया अतरंगानपि विधीन् बहिरंगो ल्यप् बाधते' (परि ५३) इति परिभाषया हित्वं न भवति। एवमप्यत्र घुमास्थागापाजहाति सां हलि ( पा० ६।४।६६ ) इतीत्वं प्राप्तं नभवति, नल्यपि ( पा० ६४।६९ ) इति वचनात् ॥२॥

अथापरामार्ययाह—

**स्वादिभिरिवोपसर्गान् दीनानर्वस्य शोभया युक्तान्।**
**हीनान् संगमयन्ति वदान्या वैयाकरण इवादरतः॥ ३॥**

१. समासेऽनक्त्वो पूर्वे ञो ल्यप् इति विहितो ल्यप् नञ्विषयं परित्यज्य प्रवर्तते इति भावः।

२. उदाराणां व्ययशीलतैव शोभते इति हेतोः अव्ययप्रेम्णः दोषत्वम्।

३. परिसाहाय इति क०।

वदान्या उदारा अर्थस्य धनस्य शोभया दीप्त्या हीनान् दीनान् सन्तोषाभावादति दुःखितानादरतो मानपूर्वकं[1] स्वायैः स्वादिभिर्धनवस्त्रवाहनादिभिः संगमयन्ति योजयन्ति। स्वयं स्वकीयाल्पधनतादि वि[2]चारविधुरा अपि केनाप्युपायेन संतोषयन्तीत्यर्थः। उदारप्रकृतिकत्वात्।

के कानिव। यथा वैयाकरणाः पाणिनीयशास्त्रविदो रामस्येतिवत्स्वातन्त्र्येण प्रादीनां प्रयोगाभावाद्दीनान् चादिवत्स्वोपगम्यार्याभावादाहारविहारप्रतीहारशब्दादिस्थानामाङादीनां द्योत्यार्थसत्वात् क्वचित् यद्यपि अर्थवत्वमस्ति तथापि धातुनिपातयोः साधारणार्थकतया लम्बते प्रलम्बते इत्यादावधिकद्योत्यार्थाभावाच्चानर्थकानप्युपसर्गान् भादीन्स्वा[3]दिभिः सुऔजसप्रभृतिभिरेकविंशत्या प्रत्ययैर्योजयन्तीत्यर्थः।

ननु ङ्याप्प्रातिपदिकात् (पा० ४।१।१) स्वादयो विधीयन्ते प्रातिपदिकसंज्ञा च अर्थवदधातुरप्रत्ययः प्रातिपदिकम् (पा० १।२।४५) इतिविधीयमानाऽनर्थकाणामुपसर्गाणां न संभवतीति तेभ्यः कथं स्वादयो विधातुं शक्यन्त इति चेत्।

उच्यते—निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्येति वचनात् संज्ञा। ननु ङ्याप्प्रातिपदिकात् (पा० ४।१।१) इति स्वादिविधिवाक्यस्य बहुषु बहुवचनम् (पा० १।४।२१) इत्यादिसंख्याविधिवाक्येनैकवाक्यत्वादेकत्वादिष्वर्थेषु विधीयमानाः स्वादयः सत्यामपि प्रातिपदिकसंज्ञायां निपातेभ्यो न भवितुमर्हत्येकत्वाद्यर्थराहित्यात्। सत्यम्। भिन्नवाक्यतयैव स्वादीनां विधानम्। एवं सति यत्र शमशब्दादिवदेकत्वाद्यर्थः संभवति तत्र बहुष्वर्थेषु बहुवचनमेव नैकवचनादिकमिति सूत्रद्वयं नियमार्थमेवातोऽनर्थकेभ्योऽपि सुपामुत्पत्तिरविरुद्धा।

अथवा एकस्मिन्नेवैकवचनं न द्वयोर्न बहुषु। द्वयोरेव द्विवचनं नैकस्मिन् न बहुषु। बहुष्वेव बहुवचनं नैकस्मिन्न द्वयोरित्येवं प्रकृतार्थापेक्षया प्रत्ययनियमेऽपि न दोषः। अन्यच्च। अधिपरी अनर्थकौ (सा० १।४।९३) इत्यनेनाध्यागच्छति पर्यागच्छतीत्यादौ गत्युपसर्गसंज्ञाबाधिकां कर्मप्रवचनीयसंज्ञां शास्त्याचार्यस्तद्ज्ञापयत्यनर्थकाणामप्येषामर्थवत्कार्यं भवतीति। क्रियायोगे हि उपसर्गाः क्रियायोगे (पा० १।४।५९) गतिश्च (पा० १।४।६०) इति गत्युपसर्गसंज्ञयोर्विधानादनर्थकयोः क्रियायोगाभावात्तत्संज्ञाप्राप्तिरेव नास्तीति तद्बाधनाय संज्ञाया न विधानमन्यथाऽनर्थकमेव स्यादिति ज्ञापकमेव।

---

१. स्वायैः स्वस्य धनस्य आयस्तैरित्यर्थः।

२. विचार इति क०।

३. स्वाम्बादिरिति क०।

यत्तु सुः पूजायाम् ( पा० १।४।९४ ) अतिरतिक्रमणे च ( पा१ १।-४।९५ ) इत्यादिना कर्मप्रवचनीयनिमित्तकार्थ कथनं स्वादीनां तत्वर्थद्योतनपरं द्रष्टव्यम् । स्वाद्युत्पत्योः फलं तु पदसंज्ञायां पदस्य । पा० ८।१।१६ ) पदात् ( पा ८।१।१७ ) तिङ्ङतिङः (पा० ८।१।२८) इतिनिघातादि ।

नन्वर्थवदनर्थकयोरसामर्थ्यात् कथं निघात इति चेत्—केचिदाहुः—प्रातिपदिकसंज्ञाविधानसामर्थ्यादिति । अपरे तु समानवाक्यता निमित्त एव निघातोन्तसामर्थ्यनिमित्तकः । साव्ययकारकसविशेषणं वाक्यमिति वाक्यलक्षणात् समानवाक्यता चेहास्तीति दिक् ।। ३ ।।

अथान्यामाह—

**परात्मसाधारणता महोदारे महोदया ।**
**डारौरसादेश इव स्वभावादेव शोभते ।। ४ ।।**

परोऽन्यः आत्मा आत्मीयः । महोदाराणां सदैव परात्मीययोः साधारणता साम्यं प्रसिद्धमस्ति ।

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानान्तु वसुधैव कुटुम्बकम् ।। इति ।।

वचनादुपकारविधौ भेदाभेदविचारतिरस्करणशीलता सा महोदारे स्वभावात् प्राग्भवीय[२]सुकृतसंस्कारादेव शोभते नतु कृत्रिमांगीकारेणेत्यर्थः । कीदृशी महोदया । स्वर्गादिसुखसंप्राप्तिहेतुः । उक्तञ्च व्यासेन—

"विद्या तपो धनं शौर्यकुलीनत्वमरोगिता ।
राज्यं स्वर्गश्च मोक्षश्च सर्वं धर्मादवाप्यते ।।" इति ।।

कस्मिन्निव । डारौरसादेश इव । यथा डारौरसादेशे परात्मसाधारणता शोभते। कथम् । लुटः प्रथमस्य डारौरसः ( पा० २।४।८५ ) । लुडादेशयोः परस्मैपदात्मनेपदसंबंधिप्रथमपुरुषयोर्डारौरस इत्येते आदेशाः क्रमात् स्युः । अत्र डारौरसां त्रयाणामादेशानां परस्मैपदात्मनेपदसाधारणतास्ति । कर्त्ता । कर्त्तारौ । कर्त्तारः ।

---

१. स इति क प्रस्तके नास्ति ।
२. पूर्वजन्मार्जितसुकृतसंस्कारादित्यर्थः ।

ननु परस्मैपदे त्रयःप्रथमपुरुषसंज्ञकास्तिवादयः आत्मनेपदेपि त्रय इति षट् स्थानिन आदेशाश्च त्रय इति वैषम्यात् [1]संख्यातानुदेशाभावेन कथमुभयपदसाधारणतेति चेत्सत्यम् ।

आन्तर्यतो व्यवस्था करिष्यते । अर्थतश्चान्तर्यम् । यथा एकार्थस्यैकार्थो द्व्यर्थस्य द्व्यर्थो बह्वर्थस्य बह्वर्थ । कथं पुनर्डादीनामैकार्थ्याध्यवसायः ।

यतस्तिवादीनां स्थाने कृतानामेव डारौरसामैकार्थ्यत्वादेरवज्ञातु शक्यत्वात् । एकार्थत्वाद्यवगतिं विना तत्स्थाने कर्त्तुमशक्यत्वाच्चेति चेत् । अत्रायं समाधिः । प्रयोगदर्शनाच्छक्यमैकार्थमध्यवसितुमिति हरदत्तः । अथवा आदेशा अपि षडेव निर्दिश्यन्ते एकशेषनिर्देशात् डारौरसश्च डारौरस इति कृतद्वन्द्वानामेकशेषोऽयम् ।

केचित्तु डा च डा च डा रौच रौ च रौ रश्च रश्च रस्, डा च रौ च रस् च डारौरस इति कृतैकशेषाणां द्वन्द्वमाहुः । तदशुद्धम् । अनिष्टः संख्यातानुदेशः स्यात् । यथा तिप्तसोर्डात्रितयोरौः आतां त्रयोरसिति । तस्मात्पूर्वैव व्यवस्था श्रेयसी । एवं साधुत्वे सिद्धे तादृशशब्दोच्चारणान्महोदयत्वमपि सिद्धम् । एकशब्द इत्याद्युक्तेः ॥

अथान्यामाह—

**अबह्वर्थेऽप्यनेकार्थसमर्पका समुन्नते ।**
**इतरेतरयोगे च महोदारे किमन्तरम् ॥ ५ ॥**

महोदारे दानयोग्यपात्रापात्रविचारणरहितेऽत्युदारे इतरेतरयोगाख्येव द्वन्दसमासे अनयोः किमन्तरम् । किं वैलक्षण्यम्, न किमपीत्यर्थः । कीदृशे महोदारे । अबह्वर्थेऽपि न बह्वर्थो धनं यस्येति स्वल्पधनेऽपि वदान्ये —

विद्या तपो धनं शौर्यं कुलीनत्वमरोगता ।
राज्यं स्वर्गश्च मोक्षश्च सर्वं धर्मादवाप्यते ॥
यस्तु धर्मं परित्यज्य लोभादर्थमभीप्सति ।
स हेमराशिमुत्सृज्य पांशुराशिं जिघृच्छति ॥
देवता मुनयो नागा गन्धर्वा गुह्यकास्तथा ।
धार्मिकं पूजयन्तीह न धनाढ्यं न कामुकम् ॥

---

१. यथासंख्यमनुदेशः समानाम् इत्यनेन इति भावः ।

इत्यादिव्यासवचनांगीकारेणाऽनेकेषां स्वशक्त्यधिकानामर्थानां समर्पणे याचकेभ्यो दातुं समुन्नते उद्युक्ते ख्याते इति वा। कीदृशे इतरेतरयोगे।

घटश्च पटश्च इति घटपटावितीतरयोगोपि द्व्यर्थत्वात् बह्वर्थोपि द्व्यर्थत्वादेवानेकार्थसमर्पक इति द्वयोः साम्यम्। यद्यपि घटपटकटा इत्यादिरितरेतरयोगो बह्वर्थेऽप्यस्ति तथापि न तथाविधोत्र दृष्टान्तत्वेनाभिमत इति ग्रंथकृत्।

नन्वितरेतरयोगोऽयं चार्थे उक्तः चार्थे द्वन्द्वः (पा० २।२।२९) इति विधानात्। तत्र समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। एष्वर्थेषु वर्तमानमनेकं सुबन्तं वा समस्यते स द्वन्द्वः। परस्परनिरपेक्षाणामनेकेषां पदार्थानामेकस्मिन्नन्वयः समुच्चयः। तत्रैवान्यतरस्यानुषंगिकत्वेऽन्वयोऽन्वाचयः। अन्योन्यापेक्षया एकक्रियासंबंध इतरेतरयोगः। परस्परसापेक्षाणामेवावयवभेदतिरोधाने संहतिरूपेणान्यत्रान्वयः समाहारः। तत्रेश्वरं गुरुं च भजस्वेति समुच्चये वटो भिक्षामट गां चानयेत्यन्वाचये च न समासोऽस्त्यसामर्थ्यात्।

धवखदिरौ इतरेतरयोगः। संज्ञा परिभाषमिति समाहारः। तत्र-धवश्च खदिरश्चेति वाक्येऽव्ययश्चकारार्थो लिंगसंख्याभ्यां न योगमायातीति-दृष्टम्। एवं सति तदर्थे जायमान इतरेतरयोगःसमासो लिङ्गसंख्यायोगं कथमनुभवतीति चेत्। सत्यम्। शब्दशक्तिस्वाभाव्यादिग्रंन्थसंख्यायोगो भवति। तथाहि समानानामीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते अपरे न। नहि कश्चिदर्थवानिति सर्वैरर्थवद्भिरनर्थकैरिति वा सर्वैरनर्थकैर्भवितव्यमिति। अत्रास्माभिः किं शक्यते कर्त्तुं यद्वाक्ये व शब्देन द्योत्यस्यार्थस्य लिङ्गसंख्ये न भवतः। समासे तु क्वावेते[1] स्त इति। अथवार्थस्य समासार्थस्य द्रव्याश्रयत्वात् तदाश्रये लिङ्गसंख्ये भविष्यत इत्येवं समाहारद्वन्द्वस्यापि नपुंसकतैकवचने भवत इति शिवम्।

**ज्योतिर्विद्वरनीकंठविदुषः श्रीचन्द्रिकायास्तथा।**
**पुत्रेणाहिगवीप्रसारितधिया गोविन्दनाम्ना कृते॥**
**श्रीसभ्याभरणस्य सुज्ञसुखदेऽल्पे रश्मिभालाभिधे।**
**व्याख्याने शशिधृत्पुरी वसतिनोल्लासश्चतुर्थोऽगमत्॥**

•

---

१. बावकेतेति क।

# अथ पञ्चम उल्लासः

**गणेशं नीलकण्ठञ्च नत्वा गोविन्ददैवंवित् ।**
**क्लिष्टं कृपणनिन्दाख्यमुल्लासं विवृणोम्यहम् ।। १ ।।**

तत्रानुष्टुभाख्येन प्रथमवृत्तेन कृपणनिन्दामाह—

**एकार्थमपि यो यच्छन्ननेकार्थेऽपि गच्छति ।**
**क्लीबतां स समाहारद्वन्द्वेन न कथं समः ।। १ ।।**

स प्रसिद्धः कृपणः समाहाराख्यद्वन्द्वसमासवाक्येन शशकुशपलाशमित्यादिना समस्तुल्यः कथं कुतो न स्यादपि तु सर्वथा सम एव भवेत् । स कः यः कृपणो अनेकार्थोऽप्यगण्यहिरण्यवसनादिसमस्तवस्तुविस्तारभासितभवनोप्येकमप्यर्थवस्तु यच्छन्नतिथये समर्पयन् क्लीवतां क्लीब अधाष्टर्य इति धात्वर्थानुसारात् कातरतां मम सर्वस्वं गतं किमिदानीम[1]दनीथमित्यधीरतां गच्छति प्राप्नोति । दृष्टान्ते तु समाहारद्वन्द्वोप्यनेकावयवत्वादनेकार्थोपि सन् भवति वावयवभेदतिरोधानेन प्राधान्यात् संहतिरूपैकार्थ समर्पकोक्त एव तत्रैकार्थमेकवचनमनुभवति ।

तथा द्वन्द्वश्च प्राणितूर्यसेनांगानाम् ( पा० २।४।२ ) इत्यादिसूत्रकदम्बकेनैकवद्भावं भजन् स नपुंसकम् ( पा० २।४!१७ ) इति वचनान्नपुंसकतामप्यनुभवतीति साम्यमुभयोः ।

ननु समाहारस्यैकत्वादेकवचनसिद्धौ किमर्थमेकवद्भावविधानमिति चेत् सत्यम् । नियमार्थमेतदेकवद्भावप्रकरणं यथा प्राण्यंगादीनां समाहारद्वन्द्व एव, एवं जातिरप्राणिनाम् ( पा० २।४।६ ) इत्यादीनामपि । दधिपय आदीनामितरेतरयोगद्वन्द्व एव । वृक्षमृगतृणधान्यव्यंजनादीनामुभयथेति ।

ननू द्विगुरेकवचनम् ( पा० २।४।१ ) इत्यनुवर्त्तते, तेन प्राण्यंगादीनां द्वन्द्व एकवचनान्तो भवतीत्येवमर्थो लभ्यते । समाहार एवेत्ययमर्थस्तु कथं लब्धुं शक्यते ।

उच्यते —स प्राण्यंगादीनां द्वन्द्वो भवति य एकवचन इत्येवमत्र वचनव्यक्तेरङ्गीकारादेकवचनो द्वन्द्वश्च समाहार एव । संच चार्थे द्वन्द्वः ( पा० २।२।२९ ) इति सिद्ध एवेति प्राण्यंगादीनामित्यारंभसामर्थ्यात्तु

---

१. भक्षणीयम् इत्यर्थः ।

समाहार एवैषामिति नियमः सिध्यति, न तु दधिपयसी इत्येवमादीनामपि एकवचनो द्वन्द्वः। स एषां न भवतीति वचनव्यक्त्या समाहारद्वन्द एव प्रतिषिध्यते। वृक्षमृगेत्यादीनां तूभयथेति ॥ १ ॥

अथोपेन्द्रवज्राछन्दसान्यामाह—

**यदुत्तरे याति न या प्रकाशं निवृत्तिरप्यस्य निसर्गसिद्धा।**
**नञः समासेन समः समर्थोऽप्युदीर्यते हा कृपणो न साधुः ॥ २ ॥**

कृपणः नञः समासेन अब्राह्मण इत्यादिना तत्पुरुषविशेषेण नञ् समासेन सम उदीर्यते कथ्यते। साधुः। समीचीन इति लोके नोच्यते हा' इति खेदे नञ्समासस्तु लोके साधुरुच्यते इत्यर्थः।

ननु नञ्समासः समर्थोऽस्ति नायं तादृशः स्यादित्यत आह—समर्थोपीति। बहुद्रव्योऽपीत्यर्थः। यद्यप्यभियुक्तैः 'सर्वे गुणाः काञ्चनमाश्रयन्तीत्युक्तं तथापि तदुदारविषयकमेव ज्ञेयम्। यतः।

प्रियः प्रजानां दातैव न पुनर्द्रविणेश्वरः।
आगच्छन् काङ्क्ष्यते लोकैर्वारिदो न तु वारिधिः।

इतिन्यायादप्रियस्य कृपणस्य को वा गुणान् वक्तुमिच्छति। महोदारस्य त्वसतोऽपि गुणान् लोको वक्तीत्यर्थः। स क यदुत्तरेऽतिथिभिर्याचिते सति यस्य कृपणस्योत्तरे प्रतिवचने क्रियमाणेऽर्थस्य प्रार्थनीयस्य वस्तुनो निवृत्तिरप्राप्तिर्नञानिराकरणार्थेन निषेधेन प्रकाशं प्राकटयं याति। न देयमित्येव मुखेन[1] वक्ति, न तु व्यंजनयेत्यर्थः।

नन्वकालप्रार्थनोत्पन्नक्रोधानुरोधान्निषेधोक्तावपि न वास्तवी स्यादप्राप्तिरित्यत आह निसर्गसिद्धेति। कृपणादर्थाप्राप्तिर्निसर्गेण स्वभावेनैव सिद्धा नोपाधिकीत्यर्थः।

व्याकरणपक्षे तु—अब्राह्मण इति नञ्समासः। साधुःसाधुत्वेनाभिमतः-शिष्टानाम्। तथा समासार्थोऽपि पदद्वयाभ्यां परस्परं सङ्गतार्थवान् समर्थः पदविधिरित्युक्तेः। स कः। यस्य नञ्समासस्योत्तरे उत्तरपदे निवृत्तिपदार्थके निसर्गसिद्धा स्वाभाविक्यर्थस्य निवृत्तिर्नञाप्रकाश्यते द्योत्यते।

अयमत्राशयः—नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगति। (परि० ७६)।

---

१. सुखेनेति क०।

अस्यार्थः-नञयुक्तमिवयुक्तं च पदमन्यस्मिंस्तद्भिन्ने सदृशे तद्धर्मेण समानेऽधिकरणे द्रव्ये प्रतीतिं जनयसि। तथाचायमर्थो लोके गम्यते। अब्राह्मण इत्यत्र नञ्पदं ब्राह्मणनिवृत्तिमभिदधद् ब्राह्मणव्यतिरिक्तं द्विजत्वसाधर्म्याल्लोके क्षत्रियं वैश्यं वाभिदधाति, न तु मृत्पिण्डमिति। अतएवोत्तरपदार्थप्रधानस्तत्पुरुष इत्यभियुक्तस्य रवाद् ब्राह्मणनिवृत्तिमत् क्षत्रियादिकमेव वाच्यम्। नञ्समासस्येत्यतोषः। असर्वस्मै इत्यादिषु सर्वादीनि सर्वनामानि (पा० १। १।२७) इत्यत्र संज्ञोपसर्जनानां प्रतिषेधोक्तेरत्र[1] तदभावा त्यदादीनामः (पा० ७।२।१०२) इत्यकारः सर्वनाम्नःस्मै (पा० ७।१।१३) इति स्मैभावः क्रमेण भवति।

नन्वर्थावगत्यर्थः शब्दप्रयोगः। स चेन्निवृत्तः किमर्थमसौ प्रयुज्यत इति। सत्यम्। ब्राह्मणशब्दस्यात्र निवृत्तिरस्तीति प्रतिषेधविषयप्रदर्शनाय नञ्सहितस्य प्रयोगोऽभिहितोऽन्यथा नेत्युक्ते कस्य पदार्थस्य नञानिवृत्तिरुच्यत इति सन्देहः स्याद्विदुषामित्यास्ताम्[2] ॥ २ ॥

अथापरामाह—

**अश्रुतप्रत्ययप्रीता[3] असत्त्ववचना सदा।**
**निपाता अक्रियाभाजाः कृपणाश्चादयो यथा ॥ ३ ॥**

कृपणा लोकाश्च वा ह इत्येवमादयश्चादयो यथा सन्ति तत्सदृशा इत्यर्थः। कृपणपक्षे कीदृशास्ते! श्रुतस्य शास्त्रस्य प्रत्ययो ज्ञानं येषां ते। प्रत्ययाऽधीनशपथज्ञानविश्वासहेतुष्वित्यमरः। (अ को ) सकलशास्त्रविदस्तेषु प्रीताः सन्तुष्टाः। अथवा श्रुतस्य ज्ञानेन प्रीतास्तादृशा न भवन्ति। अथवा न विद्यते श्रुतप्रत्ययो येषां ते अश्रुतप्रत्यया जडास्तेषु प्रीताः। सर्वथा मूर्खा इत्यर्थः। सुधीभिः सह प्रीतौ कदाचिल्लज्जयापि धनदानं स्यादिति शङ्कमाना मनागपि तैः सहप्रीतिभाजो न भवन्तीत्यर्थः। तथा असत्त्ववचनाः। सदा हिरण्यादिपदार्था नासत्त्वेप्यर्थिभियाश्चाकालेऽसत्त्वभावो मन्निकटे किमपि नास्तीत्येव वचनं येषां ते सर्वकालम्। तथा नियतो निश्चितः पातो नरके पतनं येषां ते तादृशाः। कुत इत्यत आह—अक्रियाभाजः[4]। क्रिया वेदविहि-

---

१. संज्ञोपसर्जनीभूतास्तु न सर्वादयः इति।
२. विदुषामपीति भावः।
३. अश्रूत इति क०।
४. नतु निष्क्रियाः किन्तु विरुद्धक्रियाकर्तार इत्यर्थः।

तानुष्ठानं तद्विरुद्धा क्रिया तां भजन्ते। धनव्ययभीतेर्नित्यनैमित्तिकाम्यकर्माणि नाचरन्तीत्यर्थः।

व्याकरणपक्षे। कीदृशाश्चादयः। अव्ययादाप्सुपः ( पा० २।४।८२ ) इति लुक्संज्ञकप्रत्ययादर्शनविधानादश्रुतः[1] कर्णपथागोचरो यः स्वादिप्रत्ययस्तेन प्रीताः सन्तुष्टास्तादृशानामेव साधुत्वाख्यानात्। तथा सदा असत्त्ववचनाः सत्त्वं द्रव्यं न सत्त्वं असत्वं तस्य वक्तारोऽद्रव्यार्थाः। अतएव निपाता निपातसंज्ञकाः। चादयोऽसत्त्वे ( पा० १।४।५७ )। अद्रव्यार्थाश्चादयो निपातसंज्ञका भवन्तीति वचनात्[2]। तथाऽक्रियामाजः। भ्वादिधातुवाच्या साध्यरूपा या सा क्रिया।

यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते।

इत्युक्तेः।

तादृशीं क्रियां द्योत्यत्वेनापि न भजन्तीत्यर्थः। इदं तदिति परामर्शयोग्यम् वस्तु द्रव्यमुच्यते। यथा अयं चः चशब्दवाच्योऽयं देवदत्त इति भवति द्रव्यम्। यदा तु चकारस्य समुच्चयादिरर्थः स्वातन्त्र्येण प्रतीयते, न तु द्रव्याश्रितस्तदा भवत्यसत्त्ववाचित्वम्[3] ॥ ३ ॥

अथापरामाह—

**आश्रिताङ्गानि शुष्यन्ति यस्मिन् वत्यर्थवत्यपि।**
**स कथं न समानः स्यात् कृपणः किदजादिभिः ॥ ४ ॥**

कृपणो लोकः किदजादिभिः क इदित्संज्ञको येषान्ते कितः अच् आदौ येषान्ते अजादयः। कितश्च ते अजादयश्च आतोनुपसर्गे कः ( पा० ३।२।३ ) इत्येवं विधाः प्रत्ययास्तैः समानस्तुल्यः कथं न स्यादपि तु समान एव। सः कः। यस्मिन् कृपणेऽत्यर्थवत्यपि द्रव्यसमृद्धिमत्यपि सति आश्रितानां कृपणाश्रितानाम् पुत्रमित्रकलत्रादीनां क्षुदुपशमयोग्यमन्नमलभमानानां जाठराग्निकृतमेदोदाहादङ्गानि शुष्यन्ति कृशतां प्रयान्ति।

१. अश्रुत इत्यस्य अनुत्पन्न इति नार्थः, अव्ययेभ्योऽपि साधुत्वार्थं पदत्वसिद्धये च विभक्त्युत्पत्तेः स्वीकारात् इत्याह कर्णपथागोचरः—परिनिष्ठतरूपे अश्रुत इत्यर्थः।

२. इति टीकाकारैः व्याख्यातत्वादित्यर्थः।

३. अद्रव्यवाचित्वमित्यर्थः।

व्याकरणपक्षे—किदजादिः कीदृशः यस्मिन् किदजादौ प्रत्यये कर्त्तरि कृत् (पा० ३।४।६७) इत्यादिवचनादर्थवत्यपि परे गोदः, कम्बलद इत्यादिषूराहरणेषु आतो लोप इटि च (पा० ६।४।६४)। अजाद्यार्धधातुके किति इटि च परतः आतो लोपो भवतीति दा इत्यादीनामाकारलोपकरणाद् दइत्याद्यंङ्गानां लोपः शोषोऽपचयः सम्पद्यत इत्यस्ति साम्यमुभयोः। अस्मिन् सूत्रे द्वादशपक्षा उपन्यस्तास्ते पदमञ्जर्यादितो ज्ञेयाः ॥ ४ ॥

अथापरामार्ययाह—

**प्रतिषेधवाचिसेवितपार्श्वः प्राचामिव क्त्वा यः।**

**आशंसते स चेता अभिमतमर्थं ततः को वा ॥ ५ ॥**

प्रतिषेधं[1] वक्तुं शीलं येषां ते अति कृपणास्तैः सेवितः पार्श्वभागो यस्य तादृशोऽपि यो वदान्यो दाता स्यात्ततस्तस्मात् कः वा जनः सचेताः सज्ञानोऽभिमतं वाञ्छितमर्थं धनमाशंसतेऽभिलषते न कोपीत्यर्थः। यदि तत्संगताद्दातुरपि नाभिमतवस्तुलाभस्तर्हि कृपणात्तु सुतरामभिमतार्थलाभो[2] नास्तीत्यत्र किं वक्तव्यमित्यर्थः। क इव प्राचां क्त्वेवोक्तगुणविशिष्टो भवति तस्मान्नाभिमतार्थलाभः।

अयमर्थः—अलं खल्वोः प्रतिषेधयोः प्राचां क्त्वा (पा० ३।४।१८)। प्रतिषेधवाचिनोरलं खलु इत्येतयोरुपपदयोः सतोः धातोः क्त्वा प्रत्ययो भवति प्राचां मतेन। अलं कृत्वा। खलु[3] क्त्वा। अत्र हि।

अलं भूषणपर्याप्तिशक्तिवारणवाचकम्।

निषेधवाक्यालंकारजिज्ञासानुनये खलु।

इत्यमरोक्तेरनयोरलंखल्वोरव्यययोरनेकार्थत्वाद्यदानिषेधार्थकता तदाऽयं क्त्वा प्रत्ययस्तत्र प्रतिषेधवाच्यलं खलु शब्दसेवितपार्श्वाभ्यां कृञ्वाचिभ्यां धातुभ्यां सकाशान्न[4] कोप्यभिमतोऽर्थः सिद्ध्यति।

नन्वलं कृत्वेत्यादावुपपदमतिङ् (पा० २।२।१९) इति समासः कस्मान्न भवति। किं च स्यात्। समासे नञ्पूर्वेक्त्वो ल्यप् (पा० ७।१।३७) इति ल्यबादेशः स्यादिति चेन्न। अमैवाव्ययेन (पा० २।२।२०)। अमैव

१. प्रतिषेधम् नकारमित्यर्थः।

२. मातमतार्थेति क०।

३. खलूक्त्वा इति क०।

४. मकाशान्नेति क०।

तुल्यविधानं यदुपपदं तदेवाव्ययेन समस्यते इति नियमादुपपदसमासाभावः। यथा कालो भोक्तुमिति समासो न भवति। [1]सति समासे समासोदात्तत्वं स्यात्। यथा त्वा च। उपदंशस्तृतीयायाम् (पा० ३।४।४७) इति णमुलादि-प्रत्ययोत्पादकानि तृतीयाप्रभृतीन्युपपदानि क्त्वा तेन सह समस्यन्त इति वैकल्पिकोऽपि तत्पुरुषः समासो न भवति। कुतः उपदंशस्तृतीयायाम् (पा० ३।४।४७) इत्यतः पूर्वं सूत्रेणालंखल्वोरिति क्त्वो विधानात्। क्त्वा च (पा० २।२।२३) इत्येतत्सूत्रोदाहरणं तूच्चैः कृत्य। उच्चैः कृत्वा। अत्र ह्यव्यये यथाभिप्रेताख्याने कृञ्क्त्वाणमुलौ (पा० ३।४।५९) इति क्त्वा विहितः। कथं तर्ह्यलं कृत्येति प्रयोगः, उच्यते भूषणेऽलमित्यलं शब्दस्य भूषणार्थकस्य गतिसंज्ञायां कृत्वेति क्त्वान्तेन सह कुगतिप्रादयः (पा० २।२।१८) इति नित्यसमासः। ततो ल्यप्॥ ५॥

अथान्यामाह—

**नित्यमङ्गानि पुष्णाति यः स्वकीयानि केवलम्।**
**अडागम इवोदात्तः स कथं विधिना कृतः॥ ६॥**

यः कृपणः स्वकीयान्यङ्गानि शरीरावयवान्नित्यं सदा स्वयमसाक्षिक-मिष्टान्नभोजनाद्यनेकोपभोगैः पुष्णाति उपचयं नयति, अर्थिभ्यः किमपि न प्रयच्छति। एतादृशोपि कृपणो विधिना दैवेनोदात्तो धनजात्यादिसंपत्या महान् कथं कृत इति न जान इत्यर्थः। क इव। अडागम इव। यथा लुङ्लङ्-लृङ्क्ष्वडुदात्तः (पा० ६।४।७१) इति सूत्रेण विधीयमानोऽडागमो, यथा स्वसम्बन्धीन्यभवदित्यादिषु प्रयोगेष्वङ्गानि यस्मात्प्रत्ययविधिस्तदादि-प्रत्ययेऽङ्गम् (पा० १।४।१३) इति लब्धाङ्गसंज्ञानि स्वयमवयवो भूत्वा पुष्णात्युपचयं नयति तादृशोऽडागमो विधिनाऽप्राप्तप्रापणरूपेण सूत्रेणोदात्तः, 'उच्चैरुदात्त' (पा० १।२।२९) इत्युदात्तगुणविशिष्टः कृतः।

नन्वडागम इत्संज्ञाविषयेऽनुनासिकाज्वद् उदात्तगुणविशिष्ट एवोच्चार-णीयः, किमुदात्तवचनगौरवेणेति चेत् सत्यम्। आचार्यप्रवृत्तिर्ज्ञापयति यदिह शास्त्रे प्रयत्नमन्तरेणाक्षु निहिता उदात्तादिगुणा भेदका न भवन्ति। तथा सति वृद्धिरादैच् (पा० १।१।१) इत्यत्रादैचामुदात्तादिगुणविशिष्टानामपि ग्रहणमविशेषेण सिध्यति। तथा चाकारस्यानण्त्वाद् गुणान्तरभिन्नस्य

---

१. समासे सति किं स्यादिति प्रश्नस्योत्तरमिदम्।

प्लुतस्य तस्य ग्रहणाप्राप्तावपि तपरस्तत्कालस्य ( पा० १।१।७० ) इत्यनेनोदात्तादिगुणभिन्नस्याप्याकारस्य वृद्धिसंज्ञायां ग्रहणं स्यादित्येवमर्थं तपरकरणमिति न युक्तमभेदकत्वाद् गुणानामित्युक्त्वा तपरकरणमैजर्थमिति सिद्धान्तितं महाभाष्ये (अ० १। पा० १। आ० ३)। [1]ऐज् तु अण्सु पठितत्वात् सवर्णग्राहकोऽस्ति। एवमस्थिदधिसक्थ्यमक्ष्णामनुङुदात्तः ( पा० ७।१।७५ ) इत्यादिष्वप्येवमेव ध्येयम् ॥ ६ ॥

अथार्ययान्यामाह—

**प्रतिषेधिपरमनक्तं यस्य पदं पूर्वमूर्जितं तेन।**
**कश्चित् समासमिव तं धिक् धिक् व्यर्थं समर्थमपि ॥ ७ ॥**

तं तादृशं कृपणं धिक् धिक् अतिनिन्द्यः कृपण इत्यर्थः। अत्यादरे द्विरुक्तिर्नित्यवीप्सयोः (पा० ८।४।१ ) इत्यनेनाधिगुपर्यादिषु त्रिष्विति तमिति द्वितीया। तं कं यस्य कृपणस्य केनाप्यर्थिना प्रार्थितस्य पूर्वपदं पद्यते गम्यतेर्थोऽनेन पदं वचनमहं तुभ्यं तु-अयाचितं वस्तु दास्यामीत्येवमाकारकमूर्जितं महन्निषेधोक्तिरहितं भवति परं तदनन्तरं भाविवचनं प्रति प्रतिषेद्धुं शीलमस्य तत्प्रतिषेधसहितं तादृशमप्यनक्तं न अक्तं [2]मसृणमनक्तं रूक्षं कटु भवति। तं कश्चन कृपणं समर्थं नानाविधहस्त्यश्ववस्त्रधनादियुक्तमपि दातुमशक्तत्वादर्थिनि अप्रयोजनकं द्रव्यं धिगित्यर्थः। तत्र दृष्टान्तः। कमिव। कश्चित् समासमिव धिक्। श्लोकमध्ये समासनाम्न उदाहरणस्य वा प्रवेष्टुमशक्यत्वात् कश्चिदित्युक्तम्। कृताकृतम् अशितानशितम्। अत्र हि कृतं च तदकृतं च कार्य्यम्। अशितं च तदनशितञ्च भोज्यमिति विग्रहः। क्तेन नञ् विशिष्टेनानञ् ( पा० २।१।६० ) इति समासः।

अस्यार्थः। नञ् रहितं पूर्वपदं क्तान्तं नञैव विशिष्टेनाधिक्यं प्राप्तेन क्तान्तेनोत्तरपदेन समानाधिकरणेन समस्यते स तत्पुरुषः।

अत्र तु नञैवाधिक्यं प्रकृतिप्रत्ययोपसर्गास्तु समा एवेति निष्कर्षः। कीदृशं तत्। अनक्तं[3] न विद्यते क्तो यस्मिन्नित्यक्तमिति बहुव्रीहिस्ततो न अक्तमनक्तं द्वौ नञौ प्रकृतमर्थं गमयत इति नञ्विशिष्टं क्तान्तं तत्पुरुषसमास-

---

१. त्वाण्सु इति क०।
२. अक्तमित्यस्य मसृणमिति नार्थः किन्तु घृतादिषु अभ्यञ्जनम् कृतस्य द्रव्यस्य नाम। तेन मसृणमिति तात्पर्यार्थः। 'अक्ता शर्करा उपदधाति' इतिवद्।
३. अनक्तं = क्तप्रत्ययरहितमित्यर्थः।

वदिति यावत्। कीदृशं समर्थमपि समर्थः पदविधिः (पा० २।१।१) इति स्मरणात् संगतार्थमपि व्यर्थं कृतत्वाकृतत्वयोर्विरोधाद्यर्थं विरुद्धार्थकमपि संभवतीत्युभयोः संभवति शाब्दं साम्यम्।

ननु यदि व्यर्थं चेत् कथं तर्हि समानाधिकरण्यम्। उच्यते—पटो दग्ध इत्यादावत्रयव[1]धर्मेणापि समुदायव्यपदेशदर्शनादेकस्मिन्नवयवे कृतत्वमपरस्मिन्नवयवेऽकृतत्वं यत्तदाश्रयेण कृताकृतमिति समुदाये व्यपदेशसंभव इति न कश्चिद्दोषः। यदा पुनः प्रकृतिप्रत्ययोपसर्गा न तुल्यास्तदा नैव समासः। यथा सिद्ध च तदभुक्तं चेति प्रकृतिभेदोऽस्त्यत्र। कर्तव्यश्च तदकृतञ्चेति प्रत्ययभेदोऽस्त्यत्र। परिहृतश्च तदनुपहृतञ्चेत्युपसर्गभेदोऽस्त्यत्र। समासाभावाद्वाक्यमेवावतिष्ठते।

यद्येवं द्वितीयोदाहरणेऽशितानशितमित्यत्रानशितशब्देन अशितमनशितमिति नञिति नञ्समासे सति नलोपो नञः (पा० ६।३।७३) इत्युत्तरपदे परतो नकारलोपो तस्मान्नुडचि (पा० ६।३।७४) इत्युत्तरपदाकरस्य नुडागमे जाते नुडागमसहितमप्युत्तरपदं जातमिति समासो न स्यात्। न च यदागमास्तद्ग्रहणेन गृह्यन्ते (परि० ११) इति वचनात् कथं वैलक्षण्यकर इति वाच्यम्। तस्य श्रुतिभेदहेतुत्वात्। अवधारणेन च श्रुतिभिन्ननिराकरणात्।

उच्यते-नुडिडधिकेन चेति वार्तिकात् तदाधिक्येपि समासोक्तेः। नुडिडग्रहणं चार्थभेदस्य विकारमात्रस्योपलक्षणत्वात्। नुटस्तूदाहरणं पूर्वमुक्तम्। इटस्तु—क्लिष्टाक्लिशितमित्यत्र क्लिशः क्तनिष्ठयोरिति पाक्षिकेनेडागमेनाधिक्येपि समासो भवति। नुडिड्ग्रहणेचार्थभेदस्य विकारमात्रस्योपलक्षणत्वाच्छाताच्छितमित्यत्र शाच्छोन्यतरस्याम् (पा० ७।४।४१) इतीत्वेनार्थाधिक्ये समासो भवति। छिन्नाच्छिन्नमित्यत्र छे च (पा० ६।१।७३) इति कृतेन तुगागमेनाप्याधिक्ये[2] समासो भवति। अतएव सूत्रे नञ्ग्रहणं निष्प्रयोजनम्। यतः।

---

१. अयमर्थः—'पटो दग्धः' इति व्यवहारः पटस्यैकदेशदाहेऽपि भवति। अतएव अवयवधर्मेणापि समुदायव्यपदेशो दृश्यते तदाह—

२. गमेनंप्याधि इति क०।

पूर्वपदेर[1] नञि सति न ह्युत्तरपदं नचधिकं स्यात्तस्मात् विस्पष्टार्थं तदिति शिवम् ।

ज्योतिर्विद्वरनीलकण्ठविदुषः श्रीचण्डिकायास्तथा ।
पुत्रेणाहिगवीप्रसारितधिया गोविन्दनाम्ना कृते ।।
श्रीसभ्याभरणस्य सुज्ञसुखदेऽल्पे रश्मिमालाऽभिधे ।
व्याख्याने शशिभृत्पुरीवसतिनोल्लासोऽभवत् पञ्चमः ।।

।। इति ।।

श्रीविद्वद्दैवज्ञमुकुटहीरनीलकण्ठज्योतिर्वित्सूनुगोविन्दज्योतिर्विद्
विरचितायां सभ्याभरणटीकायां रश्मिमालाभिधायां
कृपणनिन्दानामकः पञ्चम उल्लासः ।

।। समाप्तः ।।

१. पूर्वंपदेरसनञि इति क० ।

# अथ षष्ठ उल्लासः

**एकदन्तमभिवन्द्य रमादं नीलकण्ठमपि दैवविदग्र्यम् ।**
**राजवर्णनसमुल्लसनं हि व्याकरोति बुधसज्जनतुष्ट्यै ॥१॥**

अथराजवर्णनोल्लासं विवक्षुर्ग्रन्थकृत् प्रथमपद्येनानुष्टुभाराजवर्णनमुपक्रमते—

**सुब्रह्मण्येव मघवत्तोषपोषविधायिनी ।**
**त्वत्कीर्त्ती राजते राजन्ननेकश्रुतिगोचरा ॥१॥**

हे राजन् त्वत्कीर्तिः यशो राजते शोभते। कीदृशी मघवत इन्द्रस्य तोषः सन्तोषः पोषो यज्ञादिकरणद्वारकहविः—प्रक्षेपद्वाराप्यायनं च तौ विधातुं शीलं यस्याः सा पुनरनेकाः श्रुतयः कर्णास्तेषां गोचरा विषयभूता दशसु दिक्षु विश्रुतेत्यर्थः ।

व्याकरणपक्षे । सुब्रह्मण्येव । यथा सुब्रह्मण्यनामयजुरात्मकं मन्त्रवाक्यं 'सोमैजाभते । सुब्रह्मण्योइमिंद्र आगच्छ, हरिव आगच्छ, मेधातिथेर्वृषणश्वस्य समेते ।' गौरावस्कन्दिन्नहल्यायैजारकौशिकब्राह्मणगौतमब्रुवाणश्वः सुत्यामागच्छ मघवन्निति' । कीदृशीयम् । तया सुब्रह्मण्येति श्रुत्या मघवा हूयते हविर्भागग्रहणार्थमिति कृत्वा तस्याः मघवत्तोषपोषविधायित्वम् । तथा सुब्रह्मण्या वाक्यार्थं ए[1]वश्रुतिगोचरो न किन्त्वनेकासु श्रुतिषु पठित इत्यर्थः । अथवा यज्ञकर्मण्यजपन्यूखसामसु ( पा० २।२।३४ ) इति यज्ञकर्मत्वादेक[2]श्रुतित्वं प्राप्तं सामत्वान्निषिध्यते इति प्राप्ताया उदात्तादिगुणानां भेदतिरोधानरूपाया एकश्रुतेरविषयः । सर्वैरपि लोकैः सुब्रह्मण्यैव वाक्योदात्तादिगुणाः श्रुतिभिः कर्णैराकर्ण्यत इत्यर्थः । अत्र यद्वक्तव्यं तत्सत्प्रशंसोल्लास[3]व्याख्यायामुक्तम् । त्वत्कीर्त्ती राजत इत्यत्र रो रि ( पा० ८।३।१४ ) इतिरेफस्य लोपे ढूलोपे पूर्वस्य दीर्घोऽणः ( पा० ६।३।१११ ) इति पूर्वस्य दीर्घः ॥१॥

---

१. वाक्यार्थंय श्रुति० क ।
२. दैकश्रित्वं इति क ।
३. द्वितीयोल्लास्य प्रथमश्लोकव्याख्याने इति भावः ।

अथान्यमार्यंयाह—

**नयनविलासो भवतः सर्वान् जातार्थशोभया युक्तान् ।**
**रघुवंशराज कुरुते घादीनशेषाधिकार इव ॥२॥**

हे रघुवंशराज रामचन्द्र भवतो निजचरणप्रणयमात्रदर्शनादुदश्चन्नयनविलासोऽनुग्रहदृष्टिपातो विषयानन्दस्यानर्थरूपत्वात् सर्वान् लोकान् सुज्ञताऽज्ञताविचारवैधुर्येव जातार्थस्य विना प्रयासमानिर्भूतार्थस्य स्वानन्दानुभवसाम्राज्यशोभा तया युक्तान् कुरुते । यद्वा अर्थप्रेमलक्षणा भक्तिरेव तच्छोभया युक्तान् कुरुते इत्यर्थः । तत्र दृष्टान्तः । शेषाधिकारो घादीनिव जातार्थ शोभया युक्तान् कुरुते । यथा । शेषे (पा० ४।२।९२)। तस्यापत्यम् (पा० ४।१।९२) इत्यपत्याधिकारमङ्गीकृत्य तदस्मिन्नस्ति, निर्वृत्तं, तेन, तस्य निवासः कः[1], अदूरभवः पा० ४।२।७०) इत्येते चत्वारोऽर्थाः प्रकीर्तिता इति । अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषस्तत्र यथास्वमणादयः स्युः । तत्रेदं शेषे (पा० ४।२।९२) इत्यधिकारसूत्रं राष्ट्रावारपारात् घखौ (पा० ३।२।९३)। ग्रामाद्यत्खञौ इति (पा० ४।२।९४) घादीन् प्रत्ययान् तत्र जात इति यो जातार्थस्तच्छोभया युक्तान् तत्सम्बन्धयुक्तान् कुरुत इत्यर्थः ।

ननू चातुरर्थपर्यन्तानां अपत्यादीनां निवृत्तत्वाद्वक्ष्यमाणेषु तत्र जात इत्यादिष्वर्थेषु घादीनां शेषाधिकारं विनापि सिद्धत्वाच्छेषाधिकारे जातार्थ सम्बन्धाधायकत्वं कथमुच्यते । नचार्थादेशनं[2] विना घादयः स्वार्थे मा भूयासुरिति वाच्यम् । घादीनां प्रत्ययानां जातादिष्वर्थेष्वनुवृत्या सार्थकत्वं सेत्स्यति ।

ननु तस्येदम् (पा० ४।३।१२०) इति सामान्यनिर्देशेनापत्यार्थविशेषाणामपि ग्रहणं स्यादिति चेत् । ज्ञापकान्न भविष्यति । यदयं फेश्छ च (पा० ४।१।१४९)। फिजन्ताद्वृद्धात् सौवीरगोत्रादपत्यार्थछविधानं न कुर्यात् । यतः पूर्वेत्येत्रं सूत्रं ठग्विधानार्थं वक्तव्यं ठकामुक्ते वृद्धाच्छः (पा० ४।२।१४४) इति तावच्छेः सिद्ध एवेति छविधानं ज्ञापकं नापत्यादिषु घादयो भवन्तीति । तस्माच्छेषाधिकारो निष्प्रयोजनः । उच्यते—प्राग्दीव्यतोण् (पा० ४।१।८१) इत्यणादीनां प्रत्ययानां नियतावपि परिछिन्नेष्वर्थेषु विधानात् । शेषशब्दस्तूपयुक्तादन्यतया जातादीनप्यर्थान् वशीकृत्य

---

१. क इति पाणिनिसूत्रे नास्ति ।

२. अर्थानादेशनादिति हि भाष्यम् ।

शक्नोत्यभिधातुं इति सर्वत्र घादयः सिद्धयन्तीत्यतः साकल्यार्थं शेषग्रहणम्। शेष इत्येतस्यावृत्या च जातादिष्वर्थेषु सामान्यतोऽणादयोऽपि प्रत्यया स्युः। तेन् चक्षुषा गृह्यते रूपं चाक्षुषमित्यादयः प्रयोगाः सिध्यन्ति। अतएवोक्तं शेष ( पा० ४।२।९२ ) इत्येतल्लक्षणं चाधिकारश्चेति दिक्।

अथान्यदाह—

**अनूनार्थमपूर्वं ते पदं कलहवर्जितम्।**
**राजन् शास्त्रानुगं जीयादनन्तोदात्तसेविनम् ॥३॥**

हे राजन्! ते भवतः पदं स्थानं राज्यं जीयाद्बहुकालं तिष्ठतात्। कीदृशम्। न ऊनोर्थे यस्माद्याचितेभ्यः सकलार्थप्रदं तथा अपूर्वमन्यापेक्षया गुणोत्कृष्टम्। तथासौ राज्यवता धर्मन्यायकृता च भवताधिष्ठितत्वाल्लोकैः परस्परं कलहो झकटकस्तेन[1] वर्जितम्। अथवा राज्यविभागिभिर्दायादैः[2] सामन्तैः शत्रुभिर्वा सह कलहरहितं निष्कंटकमित्यर्थः। अतएव शास्त्रानुगं[3] वंशपरम्परायातं ज्येष्ठत्वेन लब्धं वा औद्धत्यरहितमिति यावत्। तथाऽनन्ताः भूयांस उदात्ता महापुरुषास्तैः सेवितमाश्रितम्।

व्याकरणपक्षे तु—पाणिनेः शास्त्रानुगं साधुत्वेनाभिमतं पदं सुबन्तमेतद्विलक्षणमिवेतिलुप्तोपमा। यथा। माषोनम्। माषविकलं। वाक्कलहः। एषु सुबन्तसमासपदमस्ति। पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ( पा० २।१।३१ ) इतितृतीया तत्पुरुषः समासः। अत्र हि समासस्ये ( पा० ६।१।२२३) इति समासान्तोदात्तत्वं प्राप्तम्। तत्पुरुषे तुल्यार्थतृतीया सप्तम्युपमानाव्ययद्वितीया कृत्या ( पा० ६।२।२ ) इतितृतीयापूर्वपदप्रकृतिस्वरे प्राप्ते, ऊनार्थकलहं तृतीयाया (पा० ६।२।१५३) इत्यन्तोदात्तत्वं विधीयते। सूत्रार्थस्तु—ऊनार्थाः शब्दाः कलहशब्दश्च तृतीयायां तात्परे अन्तोदात्ता भवन्तीति। अत्र हि भवत्पदापेक्षया वैलक्षण्यमस्ति। कीदृशं पदम्। अपूर्वम्। न पूर्वमपूर्वं प्रयुज्यमानं न भवति किन्तूत्तरपदमित्यर्थः। माषोनं। माषविकलमित्यूनार्थम्। प्रागुदाहरणमूनशब्दान्तम्। अपरमूनार्थकं विकलशब्दान्तम्। तृतीयातु कलहवर्जितं न किन्तु कलहान्तम्। शास्त्रानुगं पाणिनिशास्त्रमर्यादयोदाहरणत्रयमप्यन्तोदात्ताख्येन वर्णधर्मेण सेवितमिति वैलक्षण्यम्।

---

१. 'झकटक' इति लोकभाषायम्। तस्यैव ध्वनेरनुकरणमिदम्।

२. दायादो भागहरः भ्राता, भ्रतृजश्च। सामन्तः—अधिकृतः जागीरदार इति भाषायाम्।

३. शास्त्रमनुगच्छतीतिविग्रहे रूपम्। तच्चानुगमनं त्रिधा पुत्रत्वेन, पुत्रेषु ज्येष्ठत्वेन, राजमर्यादापालकत्वेन च। इति त्रयोप्यर्था अत्र गृहीताः।

अथ केचिदर्थे स्वरूपग्रहणमिच्छन्ति। तेन धान्येनार्थोधान्यार्थ इत्यत्रा-प्यन्तोदात्तसिद्धिः।

वस्तुतस्तूनशब्दे एवार्थ[1] इति तदर्थानां ग्रहणम्। एषूदाहरणेषु प्रतिपदोक्तस्यैव समासस्य ग्रहणात् सूत्रे तृतीया ग्रहणं विस्पष्टार्थम् ॥३॥

अथापरमाह—

**पदन्तं[2]वाविभक्त्य[3]न्तमपरस्वादिसंगतम्।**
**महाराज महाश्चर्यमनेकार्थसमर्पकम् ॥४॥**

भो महाराज तव पदं स्थानं राजधानीनामक महामुनिपाणिनि-निष्पादितसुबन्तपदान् महाश्चर्यमतिविलक्षणम्। अथ च महान्ति नानाविधा-न्याश्चर्याण्यस्मिन् सन्तीत्येवं विधमस्ति। कीदृशम्। अविभक्त्यन्तम्। विविधाः भक्तयो रचनाः विभक्तयः न विद्यन्ते विभक्तीनामन्तो यस्मिन्नानाविधप्रकार-प्राकारप्रतोलीप्रासादसौधादिरचितमित्यर्थः।

तथा परेषां निरपराधानां ब्राह्मणा[4]दीनां स्वानि धनानि आदिशब्दात् परजिगीषापरद्रोहादि न परस्वादिभिः ( अपरस्वादिभिः ) संगतं नालि-ङ्गितमित्यर्थः। तथाऽतिथिभ्योऽनेकार्थानां गजतुरगवस्त्रालंकारादिविविध-पदार्थानां समर्पकं दायकम्।

व्याकरणपक्षे तु— राममिति पदं विभक्तिश्च (पा० १।४।१०४ ) इति कृतविभक्तिसंज्ञकप्रत्ययान्तमेवानेकार्थानां लिङ्गसंख्याकारकाख्यानां समर्प-कम्। तथा प्रकृतेः परैः स्वादिभिः सु औ जसित्येवमादिभिः सङ्गतं

---

१. ऊनशब्दे एव अर्थपदमन्वेति। तेन ऊनशब्दस्य तदर्थस्य विकलादेरपि ग्रहणम् न तु अर्थपद स्वरूपार्थकमिति भावः। तदाह मतवोधिनीकारः—पूर्वसूत्रे (तृतीया तत्कृतार्थेन गुणवचनेन (२।१।३०) ) अर्थशब्देन समासस्योक्तत्वात् इहार्थग्रहण-मभिधेयपरम्। तच्चोनशब्देनैव सम्बद्धयते, न तु पूर्वादिभिः। समसदृशयोः पृथमग्रहणादिति।

२. तव पदमिति च्छेदः।

३. विभागो विभक्ति, अनः नाशः न विद्येते विभक्त्यन्तौ ययोस्तत् अविभक्त्य-न्तम्। इति नार्थः।

४. ब्राह्मणग्रहणं वर्णस्य ज्येष्ठत्वं प्रतिपादयति। तेन निरपराधानां चतुर्णां वर्णानां धनानि यानि परस्वत्वेन गणितानि तानि न गृह्णातीत्यर्थः।

सम्बद्धम्। अत्र शास्त्रे द्विधा पदसंज्ञोक्ता। एका सुप्तिङन्तपदम् ( पा० १।४।१४ ) अपरा स्वादिष्वसर्वनामस्थाने ( पा० १।४।१७ ) इति।

प्राचीना तु रामं रामानित्यादौ क्रमेण मोनुस्वार ( पा० ८।३।२३ ) इति पदान्तस्येति ( पा० ८।३।३७ ) णत्वाभावो भवति। अर्थसमर्पकत्वं च भवति। राजभ्यां कृतमित्यादौ तु द्विवि[1]धापि राजन्शब्दस्य भ्यामि परतः, पदसंज्ञायां नलोपः प्रातिपदिकान्तस्येति ( पा० ८।२।७ ) नलोपः सिध्यति। नलोपस्यासिद्धत्वात् सुपि चेति ( पा० ७।३।१०२ ) दीर्घो न भवति। भ्यामन्तस्य तु पदसंज्ञायामनुस्वारोऽर्थवत्वं सिध्यतीत्याद्यूह्यम् ॥४॥

अथान्यदाह—

**तावकीनं बहुव्रीहिपदं प्रकृतिभावितम्।**
**चित्रं विराजते राजन् समासोदात्तसेवितम् ॥५॥**

हे राजन्! तावकीनं भवदीयं बहु अनेकं विविधं व्रीहिपदं व्रीहिशब्दो भोग्यवस्तूपलक्षणं नानाविधयोग्यवस्तुविराजितं पदं स्थानं राज्यादि चित्रं गेहप्राकारादिरचनांश्चितं सद्राजते शोभते। कीदृशम्। प्रकृतिभिः परम्परागतैर्मूलपुरुषैर्भावितं सानन्दं सेवितम्। तथा आसनमासः समं सह आसो येषां ते। अथवा संम्यगासो येषां ते समासाः। महिमातिशयेन सभायां राज्ञानुज्ञातोपवेशास्तादृशा ये उदात्ता मण्डलेश्वरा भूमिपाः राजानस्तैः सेवितं स्वजीवनार्थे कृतनिवासम्।

व्याकरणपक्षे—बहुव्रीहि समासाख्यं पदं समासस्य (पा० ६।१।२२३) इति प्राप्तं समासान्तोदात्तं बाधित्वा बहुव्रीहौ प्रकृत्या पूर्वपदमिति ( पा० ६।२।१ ) पूर्व पदप्रकृतिस्वरो विधीयतेऽतः प्रकृतिभावितं प्रकृत्यापूर्वपदस्य प्रकृतिस्वरस्थित्या भावितं तादवस्थ्यं प्रापितं तादृशं सत्समासान्तोदात्तेन सेवितं भवतीति चित्रमाश्चर्यमित्यर्थः। ननु बहुव्रीहिपदं समासान्तोदात्तसेवितमित्येतावतैवाश्चर्यसम्भवे प्रकृतिभावितमितिविशेषणं किमर्थं तस्य बहुव्रीहाववश्यभावादिति चेत् उच्यते। वप्रियो वा[2] प्रिय इत्यादौ बहुव्रीहिपदे पूर्वपदनिष्ठप्रकृतिभाववर्जिते समासान्तोदात्तसत्वेनाश्चर्याभावात्।

ननु निपाता आद्युदात्ता ( फि० सू० १८० ) इति फिट्सूत्रेण चादीनामाद्युदात्वोक्तेर्बहुव्रीहिमात्रविधीयमानः प्रकृतिस्वरोऽत्र कस्मान्न स्यादिति

---

१. द्विविधापीति। तेन राजन् भ्यामित्यत्र राजन् इत्यस्य पदत्वेन नलोपः, राजभ्यामित्यस्य पदत्वेन साधुत्वम्।

२. व इति ख।

चेत् उच्यते—उदात्तत्वस्य यत्प्रकृतविधानं तदेव प्रकृतिभावद्वारेणानुज्ञायत इति च प्रियादावनुदात्तः प्रकृतिस्वरो न भवतीति। यद्येवं कार्यप्रिय इत्यादौ तित्स्वरितम् ( पा० ६।१।१८५ ) इति स्वरितः प्रकृतिस्वरो न स्यात्। स्वरितेप्युदात्तसत्वेनोदात्तावयवस्य स्वरितस्याप्युदात्तग्रहणेन ग्रहणात्। तित्स्वरितम् ( पा० ६।१।१८५ ) इति स्वरितग्रहणानुवृत्तोर्वा स्वरितस्यापि प्रकृतिभावद्वारेणाभ्यनुज्ञात्। ततश्च प्रकृत्यापूर्वपदशब्देन पूर्वपदस्थस्य स्वरितस्योदात्तस्य वाऽभिधानात् स्वरित उदात्तो वा बहुव्रीहौ प्रकृत्या भवति समासान्तोदात्तो सत्यनुदात्तं पदमेकवर्जम् ( ६।१।१५८ ) इति नविकारमनुदात्तमापद्यत इत्यर्थाच्च प्रियादावनुदात्ते पूर्वपदे विधिरेव नास्तीति समासान्तोदात्तत्वमेव भवति ॥ ५ ॥

अथान्यदाह—

**अपूर्वोऽयं निघातस्य कुतोऽधीतो विधिस्त्वया।**
**उदात्ताः स्वरिता राम ये नानामपदे कृताः ॥ ६ ॥**

हे राम त्वयाऽयमपूर्वोऽप्रसिद्ध[1] उत्कृष्टो वा निघातस्य शत्रूणां नितरां घातस्य हननस्य नितरां घातो यस्मिन्निति निघातः[2] संग्रामस्तस्य वा विधिः कुतोऽध्रीतः पठित.। आख्यातोपयोगे ( पा० १।४।२९ ) इति पंचमी।

कथमपूर्वो ज्ञातोऽत आह—येन त्वया अनामपदे नमनं नामः न विद्यते नामो नमस्कृतिर्येणां तेऽनामाः शत्रवस्तेषां पदे स्थाने विद्यमाना उदात्ता निरतिशयशौर्यादिशालिनः स्वः स्वर्गलोकमिताः प्राप्ताः कृताः। अथवा स्वः स्वर्गलोकं इतः प्राप्तो यैस्ते तादृशाः कृतास्तथा च तादृशा अपि भवदग्रे जयभाजो न भवन्तीत्यर्थः।

व्याकरणपक्षे तु—ये ना अनामपदे तु इति पदच्छेदः[3]। ये उदात्ताः उदात्ताऽनुदात्तस्वरिता अनामपदेषु नामेति पूर्वाचार्याणां प्रातिपदिकस्य संज्ञा तद्रहितेषु तिङन्तेषु परेषु स्वरिता न कृताः किन्त्वनुदात्ता एव कृता इति शास्त्रीयमर्थमाश्रित्यापूर्वत्वमुक्तम्। तत्र हि तिङ्ङतिङ (पा० ८।१।२८) इत्यतिङन्तात् पदात्परस्य तिङन्तस्य निघातविधायकेन सूत्रेण देवदत्तः पचतीत्यादावनामपदस्यानुदात्त एव विधीयते। न पुनरुपात्तादीनां स्वरितत्वमिति दिक् ॥ ६ ॥

---

१. अप्रसिद्धः नूतनः, अत एव सर्वैर्न दृष्टश्रुतपूर्व.त्यर्थः।

२. यद्यपि निघतपदस्य संग्रामो मारणं वार्थः, स च घातपदादपि सिद्धः। तथापि व्याकरणप्रसिद्धनिघातेन श्लेषार्थं तथोपात्तम् ॥

३. पदक्षेद इति क०।

अथापरमाह—

**निहन्यते नामपदं निघायपरिभाषया ।**
**किन्तु सा वर्जितोदात्ता न समा तेऽसिधारया ॥ ७ ॥**

हे राजन् गोपायतीत्यादिकमनामपदं तिङन्तपदं निघातपरिभाषयाऽनुदात्तं पदमेकवर्जम् ( पा० ६।१।१५८ ) इत्यनुदात्तविधिरूपया निहन्यते इति पाणिनिशास्त्रे प्रसिद्धमस्ति । एवं त्वदीययाप्यसिधारया खड्गधारयाप्यनामानां शत्रूणां पदं स्थानं राज्यं वा निहन्यत इत्यपि च प्रसिद्धमित्युभयोः साम्यं तावदस्ति । किन्तु विशेषः । सा निघातपरिभाषा तेऽसिधारया समा तुल्या न नैवास्तीत्यर्थः । किं कारणम् । यतः सा वर्जितोदात्ता । एववर्जमिति वचनाद्वर्जिता उदात्ताः यया सा उपलक्षणत्वात् स्वरिता अपि तवासिधारया पुनरनामपदे निहन्यमाने ये शत्रव उदात्ताः शौर्यादिगुणशालिनस्ते न वर्ज्यन्त इति वैधर्म्यदृष्टान्तः ।

नन्वेकवर्जमिति सूत्रकृता सामान्येनोक्तं ग्रन्थकृता तु विशिष्योदात्तवर्जनं केन प्रमाणेनोक्तं । यतोऽनुदात्त[1] विधानात्तद्विरोधिनो[2] र्द्वयोरप्युदात्तस्वरितयोरेवैकशब्देनाभिधानात् ।

उच्यते—बाहुल्येन धातोरित्येवमादिभिः सूत्रैरन्तोदात्तता विधीयते । अभ्यस्तानामादिरित्यादिभिरादिः प्रत्येनसीति चेत्याद्युदात्तवर्जितेत्युक्तम् । अत्र गोपायतीति गुप धातोरन्तोदात्तत्वं तत आप प्रत्ययस्याद्युदात्ताश्च ( पा० ३।१।३ ) इत्याद्युदात्तः प्राप्तः सनाद्यन्ता धातवः ( पा० ३।१।३२ ) इति शिष्टधातुस्वरेण सति शिष्टत्वाद् बाधितः । अनुदात्तं पदमेकवर्जम् ( पा० ६।१।१५८ ) इतिगोशब्दे ओकारोऽनुदात्तः । तथा कार्यं हार्यं ऋहलोर्ण्यत् (पा० ३।१।१२४) इति कर्मणि ण्यत् । अत्र हि धातुस्वरापवादे प्रत्ययस्वरे क्रियमाणे तित्स्वरितम् ( पा० ६११८५ ) इति यकाराकारः स्वरितः क्रियते, धातोः शेषत्वेन निघात इति । स्वरितोदाहरणन्तु प्रासंगिकमुपन्यस्तम् ॥ ७ ॥

अथेतरदार्ययाह—

**अद्भुतमेतन्नृपते निघातविधिविज्ञ यत्त्वया निहतम् ।**
**उच्चैः पदं रिपूणां भवति तदन्यत्तु जायते नीचैः ॥ ८ ॥**

---

१. अनुदात्त इति क० ।
२. तद्विरोद्यानो इति क० ख० ।

पलायनपराः शत्रवश्चाश्वहस्त्यादेर्विवर्जिताः अयुध्यमाना रिपवोऽपि न हन्तव्या इति धर्मशास्त्रोक्तेर्यो निघातविधिःसंग्रामकृतिस्तं विशेषेण जानातीति निघातविधिविज्ञस्तत्संबोधने हे निघातविधिविज्ञ इति साभिप्रायं पदमुपात्तमन्यथा शस्त्रादिरहितानां शत्रूणां उच्चैर्गतिः स्वर्गलोको नास्तीत्यर्थः। हे नृपते राजन् निघातविधिविज्ञ यत्त्वया रिपूणां शत्रूणां युद्धे सम्मुखमारितानां पदं राज्यं निहतं नाशितं तत्पदं स्थानमुच्चैः स्वर्गलोकस्थं भवति। उक्तं च।

द्वावेतौ पुरुषौ लोके [1]सूर्यमण्डलभेदिनौ।
परिव्राट् योगयुक्तश्च रणे चाभिमुखो हतः।

इत्येतदेवेतदद्भुतमाश्चर्यकारि भवति। अन्यत्तु पलायनपरायणानां रिपूणां पदं स्वस्माच्च्युतं सन्नीचैर्जायते। भवत्पदकमले प्रणतं भवति। वैरिराज्यं सर्वं भवदधीनं जायत इति वाक्यतात्पर्यार्थः।

व्याकरणपक्षे तु—यत्पदं सुबन्तं तिङन्तं वा अनुदात्तं पदमेकवर्जम् (पा० ६।१।१५८) इत्युक्तेर्यस्मिन्नचि निहन्यते नीचैरनुदात्तः (पा० १।२।३०) इति कृत्वा नीचैर्भवति। ताल्वादिषु भागवत्सु स्थानेषु नीचभागोच्चार्यमाणाचकमनुदात्तसंज्ञं भवतीत्यर्थः। न तु उच्चार्यमाणाद्युदात्तसंज्ञं भवति। न तु नीचैर्भवति। नीचप्रदेशोच्चार्यमाणाच्कमुदात्तसंज्ञं न भवतीत्यद्भुतत्वं राजापेक्षया विपर्ययात्॥ ८॥

अथापरमाह—

**वशीकृतानेकपदोऽप्युतात्तोदात्तधिक्कृतिः ।**
**अष्टमामन्त्रितविधिः समो न भवता नृप ॥९॥**

हे नृप अष्टमाध्यायप्रथमपादे य आमन्त्रितविधिरुक्तः पदस्य पदात् (पा० ८।१।१६-१७)। अनुदात्तं सर्वमपदादौ (पा० ८।१।१८)। आमन्त्रितस्य चेति (पा०।१।१९) निघातविधिरुक्तः। स भवता त्वया समो न साम्यं नैव लभते। साम्याभावं विशिनष्टि। कीदृशोऽष्टमामन्त्रितविधिः वशीकृतं स्वाधीनं कृतमनेकं सर्वं पदं येन सः।

अयमर्थः। आमन्त्रितस्य च (पा० ८।१।१९। पदात्परं सर्वमामन्त्रितमपादादौ वर्त्तमानमनुदात्तं भवति इति। पचसि देवदत्तेत्यत्र देवदत्तपदं सकलमनुदात्तं कुर्वन्नप्युपात्ता स्वीकृता उदात्तस्य षाष्ठिकस्या-

---

१. स्वर्ग इति क०।

मन्त्रितस्येति (पा० ६।१।१९८) प्राप्तस्योदात्तस्य धिक्कृतिर्निराकरणं येन सः। षाष्टिकमामन्त्रिताद्युदात्तत्वं केवले आमन्त्रिते सावकाशं पूर्वोक्त-वाक्ये प्राप्तं बाधित्वा सर्वस्याप्यामन्त्रितस्य विघातं करोतीत्यर्थः। भवांस्तु कीदृशः। वशीकृतानि स्वाधीनानि कृतान्यनेकेषां शत्रूणां पदानि स्थानानि राज्यानि वा येनैतादृशोपि सन्नुपात्ताङ्गीकृता उदात्तानां सत्पुरुषाणां धिक्कृतिः तिरस्करणं येन स तादृशो न भवति। सत्पुरुषसत्कारैकनिरतत्वादिति युक्तमतुल्यत्वमित्यर्थः ॥९॥

अथान्यदाह—

**तद्धितार्थसमाहारख्यातः संख्यावदन्वितः।**
**तथापि न त्वया तुल्यः संख्यातार्थप्रदो द्विगुः ॥१०॥**

हे राजन्! द्विगुर्द्विगुनामा समासस्तथापि त्वया तुल्यो न भवति। यद्यपि विशेषणद्वयेन साम्यं तथापि तृतीयविशेषणेन साम्याभायोऽस्ति। कीदृशो द्विगुः तद्धितार्थोत्तरपदसमाहारेचेति (पा० १।१।५१) सूत्रेण पंचकपालः पुरोडाशः, पंचपूली इत्यादिषूदाहरणेषु तद्धितार्थसमाहारार्थे च ख्यातः शास्त्रे प्रसिद्धः तथा संख्यावता संख्यार्थवाचकेन पंचादिशब्दे-नान्वितः। एवं विधोपि संख्यातार्थप्रदः पंचादिकनियतसंख्याविशेषितो वः पूल्यादिरर्थस्तत्समर्पकोऽस्ति। भवांस्तु तेभ्यो याचकेभ्यो हितोऽभीष्टकारी योऽर्थो द्रविणं तस्य समाहारः समुदायस्तेन ख्यातः प्रसिद्धः याचकहितकारि-बहुधन इत्यर्थः। तथा संख्यावान् पण्डितः कविरित्यभिधानात् संख्यावद्भिः पण्डितैरन्वितो युक्तः। अर्जित इति पाठे पण्डितैरर्जितो द्रव्यप्राप्त्यर्थं कृत-सेवः।

इयांस्तु विशेषः। द्विगुः संख्यातार्थप्रदः। भवान् पुनरर्थिभ्योऽसंख्या-तमपरिमितमर्थं प्रददातीति त्वया सह द्विगुसमासस्तुल्यो नेत्यर्थः। तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये समानाधिकरणेन सुपा समस्येते स तत्पुरुषः समासो भवति।

तद्धितार्थे—पूर्वस्यां शालायां भवः पौर्वशालः। भवार्थे दिक्पूर्वपदाद-संज्ञायां ञः (पा० ४।२।१०७) इति ञः। आदिवृद्धिः।

उत्तरपदे—पूर्वा शाला प्रिया यस्य पूर्वशालाप्रियः। अत्र पूर्वाशब्दस्य स्त्रियाः पुंवद्भाषितपुंस्का (पा० ६।३।३४) दित्यादिना पंवद्भावः। शाला शब्दस्य तु न पुंवद्भावोऽप्रियादिष्वित्युक्तेः। दिक्षु समाहारो नास्ति।

तद्धितार्थे संख्या—पंचसु कपालेषु संस्कृतः पंचकपालः पुरोडाशः संस्कृतं भक्षाः (पा० ४।२।१६। इत्यण् । तस्य द्विगोर्लुगनपत्ये (पा० ४।१।८८) द्विगोर्निमित्तं यस्तद्धितोऽनपत्यार्थः प्राग्दीव्यतीयस्तस्य लुक् स्यादिति लुक् । तेनादिवृद्धचभावः । संख्यापूर्वो द्विगुः ( पा० २।१।५२ ) । तद्धितार्थे-इत्यत्रोक्तस्त्रिविधस्तत्पुरुषः संख्यापूर्वो द्विगुर्भवति ।

उत्तरपदे-पञ्चगावो धनं यस्य स पञ्चगवधनः । पूर्वयोरेवान्तरतत्पुरुषे गोरतद्धितलुकीति ( पा० ५।४।९२ ) टच् ।

समाहारे । पंचानां पूलानां समाहारः पंचपूली । अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्यत[1] ( वा० ८२२ ) इत्युक्तेर्द्विगोः ( पा० ४।१।२१ ) इति ङीष् ।।१०।।

अथ रामं संबुद्धच[2] वर्णनमाह—

**णिद्वाच्यमप्यणिद् वाच्यं तादृगप्यव्ययान्वितम् ।**
**विस्मापयति नो कांस्कान्दानं दाशरथे ! तव ।।११।।**

भो दाशरथे ! श्रीरघुनाथ, तवैतादृग्गुणविशिष्टं दानमतिथिभ्यो द्रव्यदानं कान् कान् लोकान् नो विस्मापयति । नाश्चर्यमुत्पादयति किन्तु सर्वेषामपि विस्मयं नित्यमनर्घ्यवस्तुदानसंपादकत्वाज्जनयतीत्यर्थः । कीदृग्दानम् । णिद्वाच्यं व्युष्टे प्रभाते दीयते तद्वैयुष्टमित्यणन्तेन शब्देन वाच्यत्वाण् णिद्वाच्यं णिदन्तवाच्यमिति नित्यदानमुक्तम् । तत्राह—इह विधीयमाने दाने कदाचिदनादरः स्यादिति शङ्कां वारयितुं अणिद्वाच्य-मुच्यते । हस्तेन दीयते हस्त्यमिति णकाररहितप्रत्ययान्तम् । नित्येऽपि दाने आदरातिशय' सूचितः । पुनः कीदृक् । तादृगप्यव्ययान्वितम् । अपि-शब्दः समुच्चये । तादृगपि णिद्वाच्यप्रत्ययान्तमपि यथा कथाच शब्देनायम् समुदायरूपेणान्वितम् । यथाकथाच दीयते याथाकथाचम् । यथा कथाच-शब्दस्यानादरवृत्तित्वादनादरालिङ्गितमपि तव दानं विस्मापयत्यादरकृतं तु दानं बहुविस्मयाय स्यादित्यत्र किं वाच्यमित्यर्थः ।

अथ साधनिका । पञ्चमस्य प्रथमे पादे व्युष्टादिभ्योऽण् ( पा० ५।१।९७ ) । सप्तमी समर्थेभ्यो व्युष्टादिभ्यो दीयते कार्यमित्येतयोरर्थयोरण् प्रत्ययो भवतीत्यनेनाणि सति व्युष्टे प्रभाते काले दीयते वैयुष्टमिति ।

---

१. स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ( ६।३।३४ ) इति सूत्रे इत्यर्थः ।

२. सम्बोध्य इति युक्तः पाठः ।

नय्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ( पा० ७।३।३ ) इत्यैजागमः। तथा तेन यथाकथाच हस्ताभ्यां णयतौ ( पा० ५।१।९८ )। दीयते कार्यमित्यनुवर्त्तते। तेनेति तृतीया समर्थाभ्याम्। यथाकथाच हस्तशब्दाभ्यां यथासंख्यं णयतौ प्रत्ययौ भवतः। दीयते कार्यमित्येतयोरर्थयोः प्रत्येकमभिसम्बन्धः। अत्र यथासंख्यं नेष्यते ( वा ६८६ ) हस्तशब्दस्य पूर्वनिपाताकरणात्। यथाकथाच शब्दरूपोऽव्ययसमुदायोऽनादरे वर्त्तते तृतीयार्थमात्रं संभवति। यथाकथाच दीयते याथाकथाचमित्यव्ययम्। हस्तेन दीयते हस्त्यमिति। कांस्कानिति। कानाम्रेडिते ( पा० ८।३।१२ ) इति रुत्वम्। अत्रानुनासिकः पूर्वस्य तु वा ( पा० ७।३।२ ) इत्यनुनासिकः। अत्र रुत्वप्रकरणे पक्षे अनुनासिकात् परोऽनुस्वारः ( पा० ८।२।४ ) इत्यनुस्वारः। संपुम्कानां सो वक्तव्यः ( वा० २१ )। इति जिह्वामूलीय निवृत्यर्थं[1]मिह सकारः ॥११॥

अथापरमुपेन्द्रवज्रयाह—

**रमागमः कुत्रचिदेव देव कदाचन स्याद्वचसा महर्षेः।**
**कृपातरङ्गाञ्चितया दृशा ते स सर्वतो नित्यमुदेति चित्रम् ॥१२॥**

भ्रस्जोरोपधयोरमन्यतरस्याम् ( पा० ६।४।४७ ) भ्रस्जो रेफस्योपधायाश्च स्थाने रमागमो भवति आर्द्धधातुके परे। भर्ष्टा। भर्ष्टुम्। भर्ष्टव्यम्। भ्रष्टा। भ्रष्टुम्। भ्रष्टव्यम्। हे देव। राजन् महर्षेः पाणिनेः अनेन वचसा कुत्रचिदेव भ्रस्जावेव कदाचन विकल्पेन भर्ष्टेत्यादिषु रमागमो भवति। ते तव कृपायाऽनुग्रहस्य यस्तरङ्गः कटाक्षस्तेनांचितया पूजितया दृशा दृष्टया सर्वतः सर्वस्मिन्नपि भक्तजने स रमागमः रमायाः लक्ष्म्या आगमः आगमनं नित्यं सर्वदा भवति। न पाक्षिक इति महच्चित्रमाश्चर्यमिति श्लेषः।

नन्वयं रमागमो रोपधयोः स्थाने चेत् क्रियेत् मित्वमस्य व्यर्थं स्यात्। यदि मित्वादन्त्यादचः परः क्रियत इति चेदुच्येत तर्हि रोपधयोर्निवृत्तिर्न स्यात्। सत्यम्। रोपधयोरिति स्थानषष्ठी। स्थानं च प्रसङ्गस्तथा च रोपधयोः प्रसङ्गे रम्प्रयुज्यत इत्युक्तेः। षष्ठीनिर्देशसामर्थ्यात् रोपधायोः प्रसङ्गो नैव स्याद्रमागमस्तु मित्करणसामर्थ्यादन्त्यादचः पर एव भवतीति न किंचित् क्लिष्टम्।

ननु भृष्टः भृष्टवानिति निष्ठायां परतो रमागमः कस्मान्न भवति, उच्यते। सम्प्रसारणं तदाश्रयं च कार्यं बलवत् ( परि० १३० ) इति पूर्वं विप्रतिषेधाद् वा ग्रहिज्यावयी ( पा० ६।१।१६ ) ति रमागमं बाधित्वा सम्प्रसारणमेव भवति ॥ १२ ॥

---

१. जिह्वामूलीयोपध्मानीयनिवृत्यर्थमिति युक्तम् प्रतिभाति।

अथान्यदार्याह—

**विलसद्वृद्धिसहस्रप्रकृतिर्वागस्ति पाणिनेरिव ते।**
**न तथापि शतनिषेधश्चित्रं कुत्रापि वीक्ष्यते वाचि ॥ १३ ॥**

हे राजन् ते तव वाक् पाणिनेर्मुनेर्वागिवास्ति। कीदृशी ते वाक् विलसन्तीवृद्धिर्यत्र सहस्रे तादृक् सहस्रं प्रकृतिर्यस्याः सा। सहस्रं सहस्रद्वयं सहस्रत्रयं वा देहीत्येवमाकारा ते वागस्ति यद्यपि तथापि ते कुत्रापि कस्यामपि वाचि शतनिषेधो न वीक्ष्यते। शतान्यूनं कस्मा अपि न दापयसि किन्तु सामान्यतोऽतिथिभ्यः शतं शताधिकं वा द्रव्यं दापयसि विशेष्टेभ्यस्तु सहस्राधिकमपीति भावः।

अथ पाणिनेर्वाक्कीदृशी शतमानविंशतिकसहस्रवसनादण् ( पा० ५।१।२७ ) इत्येवं रूपा विलसद्वृद्धिसहस्रप्रकृतिरस्ति।

कथं। शतमानादिभ्यो शब्देभ्योऽण् प्रत्ययो भवतीत्यार्हीयेष्वर्थेषु ठक्ठञोरपवादः। शतमानेन क्रीतं शातमानम्। एवं वैंशतिकम्। साहस्रम्। वासनम्। अत्र हि विलसन्ती वृद्धिर्वृद्धिनिमित्तं णकारो यस्मिन्नसौ विलसद्वृद्धिरण्प्रत्ययस्तस्य विलसद्वृद्धेरणः सहस्रं सहस्रशब्दः प्रकृतिर्यस्यामिति व्यधिकरणपदो बहुव्रीहिः। एतावदेव साम्यम्। विशेषस्तु- शताच्च ठन्यतावशतेः (पा० ५।१।२१) इति शतनिषेधोऽस्ति पाणिनेर्वाचि, तव तु न कुत्रापि तादृगिति चित्रम्।

सूत्रार्थस्तु—शतशब्दात् ठन्यतौ प्रत्ययौ भवत आर्हीयेष्वर्थेषु, अशतेऽभिधेये। कनोऽपवादः। शतेन क्रीतं शतिकम्, शत्यम्। अशतं इति किम्। शतं परिमाणमस्य शतकमौषधम्। अत्र प्रत्ययार्थः संघः शतमेवास्तीति प्रतिषेधकरणात् संख्याया अतिशदन्ताया कन् ( पा० ५।१।२२ ) इति कन्। यद्येवं शतेन क्रीतं शतिकं, शत्यम्। शाटकशतमित्यत्र कथं ठन्यतौ स्यातामिति चेन्न।

अत्र हि शाकटशतमिति वाक्येनैव प्रत्ययार्थस्य शतत्वं न तु शतिकमिति केवलशब्दश्रवणेन। तथा च वार्तिकम्। शतप्रतिषेधे अन्यशतत्वे अप्रतिषेध इति ॥ १३ ॥

अथेतरदाह—

**समस्तस्थानमूर्धन्यो भवन्नपि भवानिह।**
**दृश्यते न कथं जातु राजन् भीरुपदानुगः ॥ १४ ॥**

हे राजन् भवानिह लोके समस्तेषु स्थानेषु कार्येषु मूर्धन्यः श्रेष्ठो भवन् सन् जातु कदाचिदपि भीरूणां संग्रामाङ्गणगतानां पलायनपराणां शत्रूणां

पदमनुगच्छतीत्येवं भूतः कथं न दृश्यते पराङ्मुखान्न मारयति। यद्यपि सर्वत्र मुख्यस्त्वं यत्र कुत्रापि गतान्परान् भीरून् शत्रून् मारयन् केनापि निषेद्धुं न शक्यस्तथापि कदाचिदपि कोपोदयात् तत्पदवीं नानुसरसि तस्मात्त्वेष्वतिकारुणिक इत्याश्चर्यमित्यर्थः।

व्याकरणपक्षे तु—भीरोः स्थानं भीरुस्थानमिति समस्ते समासवृत्तिगते स्थानशब्दे से मूर्धन्यः षकारः स तु भीरुरिति यत्पदं तस्मादनुपश्चाद् गच्छतो वर्तमानस्य स्थानसकारस्य समास इत्य[1]नुवृत्तिमता भीरोः स्थानमिति सूत्रेण विधीयत इति भवतः सकाशाद् वैलक्षण्यमत्र। भीरुपदमनुगं यस्येति वा समासः ॥१४॥

अथोपेन्द्र[2]वज्रयापरमाह--

**क्वचिद्राजशब्दे नकारस्य लोपः स तु क्वापि तत्कार्यकार्य्येव दृष्टः।**
**स्फुरद्राजशब्दे त्वयीदं प्रसिद्धं विचित्रं स कुत्रापि नायात्यसिद्धिम् ॥१५॥**

राजेति शब्दो यस्मिन्नित्यसौ राजशब्दो जातावेकवचनं तेन केषुचिद् राजसु नकारस्य निषेधस्य लोपो[3]ऽदर्शनमस्ति याचिता राजानो मुखान्नेति न ब्रुवते तूष्णीं भूता भवन्तीत्यर्थः। परन्तु स नकारलोपः कुत्रचिद् विषये तत्कार्यकारी तस्य नकारस्य यत्कार्यं निषेधः तदेव यः करोति तादृश एव दृष्टः फलासिद्धेर्दापनमपि निषेधपर्याय एव भवति। एवं भूता अपि राजानो भूयांसः सन्ति। तथापि स्फुरन् देदीप्यमानः कर्त्तेति यावत् तादृशो राजशब्दो यस्मिन्नेतादृशि त्वयि इदं विचित्रं प्रसिद्धं यद्याचमानं प्रति नकारस्य लोप एव दानप्रसक्तत्वात्तव। स च नकारः कुत्रापि काले याचके वा सिद्धिं कार्यसिद्ध्यभावं नायात्यनुलङ्घनीयशासनत्वात्। अतएव स्फुरद्राजपदं त्वय्येवोग्रशासने महोदारे च शोभते नान्यत्र।

व्याकरणपक्षे तु—क्वचित् प्रथमैकवचने राजेति शब्दे नकारस्य लोपो न लोपः प्रातिपदिकान्तस्य ( पा० ८।२।७ ) इति भवति। क्वापि तु राजभ्यामित्यादौ तु नकारलोपो भवन्नपि अतो दीर्घो यञि (पा० ७।३।१०१) त्यनुवृत्तौ सुपि च ( पा० ७।३।१०२ ) इति सपादसप्ताध्यायीस्थे दीर्घविधौ कर्तव्येऽसिद्धिं व्रजति। दीर्घविधानवेलायां पूर्वत्रासिद्धम् ( पा० ८।२।२ ) इत्युक्तेर्नकारान्तत्वं सूचयन् अकारान्तत्वं निराचष्ट इति स्फुरद्राजशब्दाद्भवतः सकाशादत्र वैलक्षण्यम्।

---

१. नुरतिसता इति क०।

२. नेयमुपेन्द्रवज्रेत्यसंगतमिदम्। अत्र भुजङ्गप्रयातं छन्दः।

३. लोपाशे इति क०।

ननु राजानौ राजान् इत्यादावपि यथाश्रुतसूत्रेण न लोपः प्राप्नोतीति क्वचिच्छब्दौ वृथैवोपात्त इति चेन्न। न लोपः प्रातिपदिकान्तस्य (पा० ८।२।७)। इति पदानि छेद्यानि। नेति लुप्तषष्ठीकं पदं प्रातिपदिकमपि षष्ठ्यन्तं सुपां सुलुगि (पा० ७।१।३९) त्यादिना पदस्येत्यनुवर्तते समानाधिकरणे षष्ठ्यौ। प्रातिपदिकस्य पदस्य योन्तस्तत्रस्थस्य नकारस्य लोप इत्यर्थस्तस्माद्राजानावित्यादौ पदान्तत्वाभावेन नलोपाप्रसङ्गात् क्वचिदित्युक्तम्।

ननु पदान्तस्येत्येवास्तु किमर्थं प्रातिपदिकग्रहणम्। उच्यते! हन्तेर्लङि प्रथमपुरुषैकवचने हल्ङ्यादिलोपे अहन्नित्यत्र पदान्तस्थनकारस्य लोपो मा भूदित्यावश्यकं तद्ग्रहणम्। पदान्तस्येति तु राजानावित्यादिष्वतिप्रसङ्गनिवृत्तये कार्यमेव।

अथापरमाह—

**आदेशः पूर्वपरयोर्विलसन्नपि पाणिनेः।**
**असिद्धिं व्रजति क्वापि तव तु क्वापि नान्यथा ॥१६॥**

एकः पूर्वपरयोरिति वचनाद् गङ्गोदकमित्यादौ पूर्वपरयोर्वर्णयोराकारोकारयोर्विलसन् भवन्नपि पाणिनेर्मुनेरादेशो गुणादिः क्वापि कोऽसिचत् अधीत्य चे[1]त्यादौ षत्वतुकोरसिद्धः (पा० ६।१।८६) इति वचनादसिद्धिमायाति। असिद्धो भवतीत्यर्थः। भो राजन् तव त्वादेशः आज्ञा पूर्वापरदिशोर्विलसन्नप्यप्रतिघातमनुभवन्नपि अन्यथान्यप्रकारेण क्वाप्यऽसिद्धिं न व्रजतीति त्वमधिकमहत्त्वोऽसीति भावः। षत्वतुकोरसिद्धः (पा० ६।१।८६)। षत्वे तुकि च कर्त्तव्ये एकादेशो सिद्धो भवति। सिद्धोऽपि सिद्धप्रमां न जनयतीत्यर्थः। षत्वे कोऽसिचत्। क इति किं शब्दस्य पुलिङ्गस्य प्रथमैकवचनम्। असिचदिति षिच्क्षरणे इत्यस्य लुङि धात्वादेः षः सः (पा० ६।१।६४) इति सत्वम्। अडागमः। लिपि सिचि ह्वश्च (पा० ३।१।५३) इति च्लेरङ्। ङित्वाद् गुणाभावः। इतश्च (पा० ३।४।१००) इतीकारलोपः। कस् असिचदिति स्थिते ससजुषो रुः (पा० ८।२।६६) इति रुत्वम्। अतोरोरप्लुतादप्लुते (पा० ६।१।११३) इत्युत्वम्। तत आद्गुणः (पा० ६।१।८७) इत्येकादेश ओकारः। असिचदित्यकारेण सह एङः पदान्तदति (पा० ६।१।१०९) इति पूर्वरूपमेकादेशः। अत्रादेशप्रत्यययोः (पा० ८।३।५९) इति षत्वं प्राप्तमेकादेशशास्त्रस्यासिद्धत्वान्न भवति ओकारात्परस्य सकारस्याकारेण व्यवधानात्। तुकि। अधीत्येत्यत्राधि-

---

१. चेदित्यादावविति क०।

पूर्वस्येणोधातोः क्त्वान्तस्य समासे नञ्पूर्वेक्त्वो ल्यप् (पा० ७।१।३७) इति ल्यबादेशे कृते अधि इयेति स्थितेऽन्तरंगत्वादकः सवर्णे दीर्घः ( पा० ६।१।१०१ ) इत्येकादेशो दीर्घः। इदानीं ह्रस्वस्य पिति कृति तुक् ( पा० ६।१।७१ ) इति दीर्घस्य तुगागमो न प्राप्नोति। ह्रस्वत्वाभावात्। तुकि कर्तव्ये एकादेशस्यासिद्धत्वाद् भवत्यत्र तुक् ह्रस्वस्य स्थानिनः सत्वात्। नत्वसिद्धं बहिरङ्ग इति परिभाषयान्तरङ्गयोः षत्वतुकोः कर्तव्ययोः सतोर्बहिरङ्गावेकादेशौ न भविष्यत एव, किं सूत्रेणेति चेत्।

न, नाजानन्तर्येबहिष्ट्वप्रक्लृप्तिः (परि० ५२)। अस्यार्थः। यत्रान्तरङ्गे बहिरङ्गे वा द्वयोरानन्तर्यमाश्रीयते तत्र बहिरङ्गप्रकल्पनास्तीति प्रस्तुते त्वजानन्तर्यमेवास्तीत्यन्तरङ्गशास्त्रप्रवृत्यभावात् कर्तव्यमेवावश्यं सूत्रम् ॥ १६ ॥

अथान्यदार्याह—

**सर्वस्य भूप वृत्तिं चित्रं विज्ञातशास्त्रो यत्।**
**नित्यां चावधिविधुरां कुरुषे प्रतिषेधधिक्कारात्॥ १७ ॥**

हे भूप विज्ञातं शास्त्रं राजनीतिशास्त्रं येन राज्ञः कोशादिसङ्ग्रहेण भाव्यमिति जानन्नपि महोदारप्रकृतितया नित्यां सारवतीमवधिविधुरां निरवधिकालां सर्वस्याश्रितस्य ब्राह्मणादेर्वृत्तिं जीविकां कुरुषे तच्चित्रमाश्चर्यम्। कुतः प्रतिषेधधिक्कारात् दुर्जनकृतं प्रतिबन्धं धिक्कृत्येत्यर्थः।

व्याकरणपक्षे—सम्यक् विज्ञातव्याकरणशास्त्रोपि पाणिनिर्यत् सर्वस्य पदस्य वृत्तिं राजपुरुष इत्यादिकां समासवृत्तिमनित्यां सावधिकां प्रतिषेधसहितां च भवदपेक्षया वैपरीत्येनैव कुरुते, तच्चित्रम्। तथाहि—द्वितीयप्रथमपादे विभाषा ( पा० २।१।११ ) इति महाविभाषाधिकाराद् 'अपत्रिगर्तं वृष्टो देव, अपत्रिगर्तेभ्यो वृष्टो देवः' इति विकल्पस्य अपपरिबहिरंचवः पंचम्या ( पा० २।१।१२ ) इत्यारभ्य यावत् समाससंज्ञास्ति तावदिष्टत्वात्। अन्यच्च। प्राक्कडारात्समासः (पा० २।१।३) इत आरभ्य कडाराः कर्मधारये (पा० २।२।३८ ) इत्यतः प्राग्ये वक्ष्यमाणास्ते समाससंज्ञा इति समासवृत्तिश्चरणद्वयावधिकैवास्ति। किं च न निर्धारणे (पा० २।२।१०) यतश्च निर्धारणम् ( पा० २।३।४१ ) इति निर्धारणे विहिता या षष्ठी सा न समस्यते जातिगुणक्रियाभिः समुदायादेकस्य पृथक्करणं निर्धारणम्। गुणे-कृष्णा गवां सम्पन्नक्षीरा।

नन्वत्र कथं षष्ठीसमासप्राप्तिर्यावता पूरणगुणसुहितार्थेति ( पा० २।२।११ ) गुणेन समासनिषेधात्। उच्यते—गवां मध्ये या सम्पन्नक्षीरा सा कृष्णेत्येवमन्वयात्। कृष्णाशब्दस्य गवामित्यनेन सम्बन्धाभावात्। अत्र तु

बहुक्षीरत्वं गुणः। सूत्रे गुणशब्दः शुक्लादिवाचको गृह्यते जातौ—नृणां द्विजः श्रेष्ठः।

क्रियायां-गच्छतां धावन् शीघ्रः। उपलक्षणं चैतत्। संज्ञयापि निर्धारणे षष्ठी समासो न भवति। कतरो भवतो देवदत्त इति। अन्यच्च प्रतिपदविधाना षष्ठी न समस्यत इति वाच्यम् (वा० १७३)। सर्पिषो ज्ञानम्। अत्र ज्ञो विदर्थस्य करणे (पा० २।३।५१) इति षष्ठी विधीयते। विद् यथार्थज्ञानं अर्थो यस्य ज्ञानार्थस्येत्यर्थः। एवं पूरणगुणेत्यादिभिः (पा० २।२।११) षड्भिः सूत्रैः षष्ठी समासवृत्तिनिषेधो ज्ञेयः॥ १७॥

अथ रामं प्रार्थयते—

**श्रीराम चतुरोप्यर्थान् भवन्ते भवतोऽर्थिनः।**
**तत्कालमिलितानेव तद्धितोसि न किं ततः॥१८॥**

हे श्रीराम अर्थिनो याचकाः भवतः सकाशात् तत्कालमिलितानेव त्वच्चरणकमलस्मरणकाल एव चिरसेवादिप्रया[1]समन्तरेण मिलितान् सन्निहितांश्चतुरश्चतुःसंख्याकानप्यर्थान् धर्मार्थकाममोक्षरूपान् पदार्थान् भवन्ते प्राप्नुवन्ति। भूप्राप्तावात्मनेपदी सकर्मकः।

रामाख्यराजपक्षे तु—चतुरोऽर्थान् हस्त्यश्वरथपदातिरूपान् ततः कारणात्त्वं तद्धितस्तेभ्यो हितो मातृवद्धितकारी किं नास्यपि तु भवस्येवेत्यर्थः।

व्याकरणपक्षे—अर्थिनः शब्दार्थजिज्ञासवो यतः शब्दात् कालेन सह मिलिताः कालमिलितास्ते च ते कालमिलिताश्च तत्कालमिलितास्ते शास्त्रे प्रसिद्धाः। कालवाचकेन मासादिशब्देन प्रकृतिभूतेन मिलिता अन्वयं प्राप्तास्तमधीष्ठो भृतो भूतो भावी (पा० ५।१।८०) इति सूत्रेण विहिता ये चत्वारोऽर्थास्तान् भवन्ते प्राप्नुवन्ति। सूत्रार्थस्तु-तमिति हि द्वितीया समर्थात् कालवाचिनः अधीष्टो भृतो भूतो भावीचेत्येतेष्वर्थेषु ठञ् प्रत्ययो भवति। मासमधीष्ठो मासिकोऽध्यापकः। मासं भृतो मासिकः कर्म्मकरः। मासं भूतो मासिको व्याधिः। मासं भावी मासिको होला[2]द्युत्सवः। एकस्मादेव मासिकशब्दाच्चत्वारोप्यर्था युगपदेव प्रतीयन्ते। प्रकरणात्तु विशेषपर्यवसानं परम्। ततः कारणात् तद्धितोऽपि भवति। तद्धिता इत्यधिकारात्।

---

१. श्यास इति क०।

१. अयमुत्सवः वसन्तपञ्चमीमारभ्य चैत्रकृष्ण पंचमी (बुढ़वा मंगल) यावत् भारते विशेषतः उत्तरभारते प्रवर्तते। यत्र फाल्गुनशुक्ल पूर्णिमायां होलादाहं कृत्वा वत्सरादौ प्रभाते धूलिवन्दनं विधाय लिङ्गभगादिशब्दैः होलामर्चयन्ति।

वयन्तु ब्रूमः। तत्कालमिलितान्। स एव कालस्तत्कालस्तस्मिन् शब्दोच्चारण काल एव मिलितान् युगपत् संबद्धान् प्रतीयमानानित्यर्थः। एवं भूतांश्चतुरोऽर्थान् भवन्ते। यथा माथुर इति शब्दात्। मथुरायां जातः। तत्र जातः (पा० ४।३।२५) इत्यण्। मथुरायां भवः। तत्र भवः (पा० ४।३।५३) इत्यण्। मथुराया आगतः तत आगत; (पा० ४।३।७४) इत्यण्। मथुरा निवासोऽस्य। तस्य निवास (पा० ४।२।६९) इत्यण्। बुढ़वा मंगल सर्वत्र णित्वाद् वृद्धिः। तद्धितोप्यय भवति ॥१८॥

अथ शिखरिणी छन्दसा पाणिन्यपेक्षयाधिक्य वदंस्तदाह—

**नबाधामा[1]देशः कलयति किल व्यत्ययकथां,**
**न ते क्वापि क्वापि क्षणमनियता न प्रकृतयः।**
**द्विरुक्तिर्नास्त्येव क्वचिदपि निघातोऽस्ति न पदे,**
**मुनेर्दाक्षीसूनोरपि जयति ते रीतिरुचिता ॥१९॥**

अत्र पदानुशासनस्येति पदमध्याहार्यम्। हे महाराज दाक्षी सूनोर्मुने पाणिनेरप्यपेक्षया ते राज्यवाचकपदानुशासनाख्यातिः प्रणाली उचिता योग्या जयति, सर्वोत्कर्षेण वर्त्तते। पाणिनेस्तु सुप्तिङन्तपदानुशासनरीतिस्तादृगौचित्यं नावहतीत्यर्थः। तदेवरीतिवैलक्षण्यमुच्यते। किलेति प्रसिद्धं तवादेश आज्ञा क्वापि पदे राज्ये स्थाने वा बाधां प्रतिघातं न कलयति। प्रतिहतो न भवति। सर्वदेशीयो राजा लोको वा भवदाज्ञोल्लङ्घको नास्तीत्यर्थः। पाणिनिकृतम् अनेकाल् शित्सर्वस्येति (पा० १।१।५५) सर्वादेशं ङिच्च (पा० १।१।५३) इत्यन्तादेशो बाधते। यथा भवसे इत्यादौ थासः से (पा० ३।४।८०) इति सर्वादेश। दध्नः। दध्नेत्यादौ अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः (पा० ७।१।७५) इत्यनङादेशो अनेकालपि सर्वादेशं बाधित्वा तादेशो भवति। यद्येवं तातङपि भवतादित्यादावन्तादेशः कस्मान्न स्यात्। सत्यम्। एतत्पूर्वपक्षसमाधानादिकं सत्प्रशंसायां सततपरेष्टाशंसेति पद्यव्याख्यानेऽभिहितम्।

तथा ते क्वापि कुत्रापि व्यत्ययस्य ब्राह्मणादिवर्णानामन्योन्यविषयावगाहनरूपस्य कथा वार्त्तापि नास्ति। ब्राह्मणादिवर्णान् स्व धर्मे स्थापयसि। तत्तु वैपरीत्यं कारयसीत्यर्थः। पाणिनेस्तु व्यत्ययो बहुलम् (पा० ३।१।८५) इत्यनुशासनमस्ति। कथम्। छन्दसि शायजपि (पा० ३।१।८४) इति सूत्राच्छन्दसीति अनुवर्त्तते। तेन छन्दसि सर्वेषां सुबादीनां व्यत्ययः। उक्तञ्च—

---

१. कस्यचित् राज्ञः रामस्य वा स्तुतिरियम्।

सुप्तिङुपग्रहलिंगनराणां कालहल्चस्वरकर्त्तृयङां च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोपि य सिध्यति वाहुलकेन।

उपग्रहः परस्मैपदात्मनेपदे। कालः कालवाची प्रत्ययः। कर्तृशब्दः कारकमात्रोपलक्षणम्। तद्वाचिनानां विभक्तीनामित्यर्थः। यङि इति यङो यकारमारभ्य लिङ्यशिष्याङ्ङि (पा० ३।१।८६) इति ङकारेण प्रत्याहारः। यथा भिनत्तीत्यत्र भेदतीति छन्दसि श्नमः स्थाने शप्। मधोस्त्रप्ता इवासते। मधुन इति प्राप्तो, अधासवीरैर्दशभिर्वियूयाः। वियूयादिति प्राप्ते इत्यादिव्यत्ययो महाग्रंथेभ्योऽवसेयः।[1]

तथा यद्यपि बहवो देशा भवत्स्वामिकाः सन्ति तथाति क्वापि विषये प्रकृतयो जानपदा लोकाः क्षणमप्यनियताः उच्छृंखला न सन्ति। स्वस्वमर्यादायां तिष्ठन्तीत्यर्थः। पाणिनेस्तु अनुदात्तङित आत्मनेपदम् (पा० ३।१।१२) इत्यानिा महतात्मनेपदप्रकरणेन प्रत्ययनियमाश्रयणादनियता एव प्रकृतय। यथा एधते, प्लवन्ते, संतिष्ठते। संश्रृणुते। इत्याद्यूह्यम्। शेषात् कर्त्तरि परस्मैपदम् (पा० १।३।७८) इत्यत्रापि तथैव बोध्यम्। अतिदीव्यतीत्यादि। तथा सकृज्जलपन्तिराजान इत्युक्तेस्तवोक्तिर्वाक् द्वि[१]द्विःप्रकारिकाविधिनिषेधादिविरुद्धप्रकारालिंगिता न-नैवास्तीत्यर्थः। पाणिनेस्तु लिटि धातोरनभ्यासस्य (पा० ६।१।८) इति षाष्टिकैरनेकैः सूत्रैर्धात्वश्यवस्यैकाचो द्विरुक्तिरस्ति। यथा बभूव। पपाच। चिचीषति। बोभूयते। जुहोति। अपीपचत्। एवमाष्टमिकैरपि नित्यवीप्सयोः (पा० ८।१।४) इत्यादिभिः सूत्रैः सर्वस्य पदस्य द्विरुक्तिः। तथा भुक्त्वा भुक्त्वा व्रजति। ग्रामो ग्रामो रमणीयः। परि परि त्रिगर्त्तेभ्यो वृष्टो देवः। उपोपमेय रामयशः। उपर्युपरि ग्रामम्।

अध्यधि ग्रामम्। अधोऽधोलोकं हरिः। एकैकमक्षरं पठति। भीत भीत इत्यादि द्विरुक्तिर्ध्येया। तथा यद्यपि ते बहूनि राजधानी सदृशानि पदानि स्थानानि सन्ति तथापि क्वचिदपि ते पदे निघातश्चौराद्युपद्रवः शत्रुकृतः पराभवो वा नास्ति। पाणिनेस्तु मतेपदे अनुदात्तं पदमेकवर्जम् (पा० ६।१।१५८) इत्यनुदात्तापरपर्यायो निघातोऽस्ति। यथा कर्त्तव्यमित्यत्र तव्यप्रत्ययस्याद्युदात्ताश्च (पा० ३।१।३) इति। प्रत्ययस्याद्युदात्तत्वे परिशिष्टस्य निघातः तथा भङ्गुरम्। भंजेर्धातुस्वरेणान्तोदात्ताद् भञ्जभासमिदोघुरच् (पा० ३।१।१६१) इतिघुरच् प्रत्ययः। चजोः कुघिण्यतोः (पा० ७।३।५२) इति कुत्वं तत्र प्रत्ययस्य तु चितः (पा० ६।१।१६३)।

---

१. व्याकरेभ्यः स्वरवैदिक इत्यर्थः।

चितोन्त उदात्तो भवतीति रेकाकार उदात्ते प्राक्तनावचावनुदात्तौ। एवं भासुरं मेदुरमित्यत्रापि ध्येयम्। तस्यात् कः पाणिन्यपेक्षयोत्कृष्टतर इति शिवम् ॥ १९ ॥

ज्योतिर्विद्वरनीलकण्ठविदुषः श्रीचन्द्रिकायास्तथा ।
पुत्रेणाहिगवीप्रसारितधिया गोविन्दनाम्ना कृते ॥
श्रीसभ्याभरणस्य सुज्ञसुखदेऽल्पे रश्मिमालाभिधे ।
व्याख्याने शशिभृत्पुरीवसतिनोल्लासो हि षष्ठोऽभवत् ॥

इति
श्रीविद्वद्दैवज्ञमुकुटहीरनीलकण्ठज्योतिर्वित्सूनुगोविन्दज्योतिर्विद्विरचितायां
सभ्याभरणटीकायां रश्मिमालाभिधायां
॥ राजवर्णननामकः षष्ठउल्लासः समाप्तिमगमत् ॥

# अथ सप्तम उल्लासः

गणेशं सिद्धिदं नत्वा नीलकण्ठं च चन्द्रिकाम् ।
उपकारप्रशंसाख्यमुल्लासं व्याकरोम्यहम् ।।१।।

अथोपकारप्रशंसोल्लासं विवक्षुर्ग्रन्थकृद्रामचन्द्रः शार्दूलविक्रीडिताख्येन प्रथमपद्येनोपकारप्रशंसां वर्णयति—

द्वन्द्वस्यावयवैः परार्थपरतामध्यापिता ये चिरम् ।
हन्तैतान् स्तुतिगोचरन्नगयाम्येवं न निन्दामि च ।।
ते जीवन्तु परं परार्थपरतास्वाचार्यकं स्वीकृतम् ।
येषां तत्पुरुषस्य तैरवयवैः स्वार्थादरेणोज्झितैः ।।२।।

इह प्लक्षन्यग्रोधावित्यादिषु द्वन्द्वपदेषु प्लक्षपदस्य स्वार्थमिलितन्यग्रोधार्थतेति न्यग्रोधसाहित्यलक्षणयोच्यते । तत्रेदमुच्यते ये पुरुषाः द्वन्द्वस्य द्वन्द्वाख्यसमासस्य वावयवैः प्लक्षादिपदैः परार्थपरतां स्वार्थाविरोधेन परार्थसाधनं शिक्षिताः बोधितास्तादृशान् सामान्यपुरुषान् हन्तेति खेदे स्तुतिविषयं न गमयामि न पुनरेवं न निन्दामि यतः परार्थपरा न निन्द्याः । स्वार्थपरा न स्तुत्याः । उक्तञ्च भर्तृहरिणा—

"सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये" इति । तस्मादुत्तमास्तुत्या इत्याह । ते जीवन्त्विति ते सत्पुरुषाः परमतिशयेन जीवन्तु । ते के । तत्पुरुषाख्यसमासस्य राजपुरुष इत्यस्य तैरवयवैः समासनिष्ठपदैः स्वार्थादरेण स्वार्थप्राधन्येनोज्झितैः रहितैर्येषां उत्तमानां पुरुषाणां आचार्यस्य भावं आचार्यकम् । योपधाद् गुरुपोत्तमाद् वुञ्, (पा. ५।१।१३२) इति वुञ् । सुष्ठुशोभनमाचार्यकं परार्थे परकार्ये परा उद्युक्तास्तेषां भावे परकार्यकर्तृत्वे स्वाचार्यकं शोभनोपदेशगुरुत्वं स्वीकृतमङ्गीकृतम् । यैस्तत्पुरुषोत्तरपदेभ्यः परार्थपरताऽभ्यस्ता ते उत्तमा इत्यर्थः ।

"एके सत्पुरुषा परार्थघटका स्वार्थं परित्यज्य ये"

इति भर्तृहर्य्युक्तेः ।

व्याकरणपक्षे तु राजपुरुष इत्यादौ तत्पुरुषे राजपदात् परो यः पुरुषशब्दस्तदर्थो यो वाक्यावस्थायामनुक्त[1]स्तदभिधायकत्वात् परार्थाभिधानं वृत्तिरिति वृत्तिलक्षणात्स्वार्थपरित्यागेन परार्थपरता अति ।

१. अनुक्तदेस्त इति क. ।

तथाहि वाक्ये यथा राजा पुरुष इत्यादौ स्वार्थनिष्ठयोः राजपुरुषपदयोः राजपदं पुरुषेण सम्बन्धमनुभवति। एवं राज्ञः गौरश्वः कम्बलश्चेति विशेषणतया राजपदं सर्वत्रान्वेति। किं च पूर्वनिपातानियमश्च। राज्ञः पुरुषः, पुरुषो राज्ञ इत्यपि भवति। पृथक् स्वरसुब्लोपः ऋद्धस्येति विशेषणं च भवति वाक्ये। एवं सर्वत्र। समासे पुनर्द्वयोरेकस्मिन् विशिष्टेऽर्थे वृत्तेः पृथगर्थाभावात् स्वभावतो विभक्तिर्निवर्तते। सैव सुपो धातुप्रातिपादिकयो, (पा. २।४।७१) इति शास्त्रेणान्वाख्यायते प्रत्यलक्षणेन च न लोपादिकार्यं यथा स्यादिति। पूर्वनिपातानियम ऐकस्वर्यं च ऋद्धस्येति विशेषणस्य सम्बन्धोपि न भवत्यसामर्थ्यात्। वृत्तौ ह्येकार्थीभावः सामर्थ्यं राजपदं राजानमभिधाय न तावत्येव पर्यवस्यति तत्संसृष्टपुरुषमप्याचष्ट इति अतः जहति स्वार्थं पदानि यस्यां सा जहत्स्वार्था वृत्तिरिति पक्षे विशिष्टार्थवाचकत्वाद् वृत्तेर्वृत्तिपदार्थानां वाक्यगतमुख्यार्थलाभाभावो न पुनः सर्वथाऽनर्थकान्येव [1]पदान्वयिन्यपितु वर्तिपदार्थानां वर्णवदानर्थक्यमेवाहुस्तन्मतं न शोभनं कि राजपुरुष इत्यत्र[2]। राजार्थोऽत्र न गम्यते। ओमृति चेत् पुरुषमात्रस्यानयनं प्राप्नोति। अथ गम्यते, किंनिबन्धना तस्य गतिः। न तावत् समासस्य तत्र शक्तिः कल्प्या राजशब्दनिबन्धना तस्यामनर्थाभावात्। न च वाक्ये राजपदं व्युत्पन्नं पुनः समासे व्युत्पत्तिमपेक्षते। तावत्येव प्रतिपद्यते राजार्थमित्यतोऽजहत्स्वार्था वृत्तिरिति साधीयः पक्ष इति हरदत्तः।

नन्वस्मिन्पक्षे विद्यमानस्वार्थयोः द्वयोः पदयोर्द्वित्वात्। द्विवचनं प्राप्नोतीति चेत्-उच्यते-राजपुरुष इति संघाताद्विभक्त्योत्पत्तव्यं संघातेन च विशिष्ट एकत्वसंख्या युक्तोऽर्थ प्रतिपाद्यते इति तदाश्रयमेकवचनमेव भवति न तु गुणभूतावयवसंख्याश्रयं द्विवचनमिति। तत्तस्मात् तत्पुरुषस्योत्तरपदार्थप्राधान्यादत्रयत्रानां पदार्थपरतैवेति सिद्धम्॥ १॥

अथ शिखरिण्याख्येन छन्दसाऽन्यामाह—

**समर्थानां येषां किमपि न पदानामिव भवेत्**
**परार्थं सामर्थ्यं किमिह कथया तद्धतधियाम्**
**स्वमुच्चैरत्वं दत्ते सुप इव य आमन्त्रितमिवा**
**परस्मै तस्मै स्यात् कुशलमिह कस्मै च न चिरम्**॥ २॥

हता नष्टा धीर्बुद्धिर्येषां ते च ते कृताधियश्च तेषां दुरदृष्टवशा विनष्टबुद्धीनां कथया वार्तया अह खेदे किं किमपि प्रयोजनं नास्ति।

---

१. पदन्वियियतु इति क। २. मित्यत्र इति क.।

'कथापि खलु पापानामलमश्रेयते यतः' इत्युक्तत्वात्। ते के अर्थ्यन्ते प्रार्थ्यन्ते लोकैरित्यर्थो धन-विद्या-हस्त्यश्वादिकमुच्यते परार्थो येषां सम्पत्तिमतां येषां पुंसा सामर्थ्यं समर्थत्वं धनविद्यादिकं परार्थं परापकृतये न भवेत्।

केषामिव। पदानामिव सामर्थ्यं परार्थं न भवति। यथा राज्ञः पुरुष इति वाक्ये ह्यस्ति। परस्परं व्यपेक्षा सामर्थ्यं कथं प्रमातृगतायाव्येपक्षाया अर्थे समारोपाच्छब्दे संस्कार इत्यर्थारोपितायास्तस्याः शब्देषूपचारादत्र राज्ञः पुरुष इत्युक्ते राजा पुरुषमपेक्षते ममायमिति, पुरुषोऽपि राजानमपेक्षतेऽहमस्येति द्वयोरपि पदयोः पृथगर्थतयाऽस्ति व्यपेक्षा तयोरपि सम्बन्धस्यान्तर्भावो भवति। वृत्तौ तु राजशब्दोपि पुरुषार्थमाचष्टे द्वयोरेकार्थीभावो भवति। तत्र च भेदनिवृत्तौ तदधिष्ठानस्य सम्वन्धस्यान्तर्भावो भवति। तत्र स्वाभाविकी षष्ठी निवृत्तिरस्तीति प्राक् पद्ये सम्यगुपपादितम्। एवं वाक्यसमासयोरर्थभेद; किं च वाक्ये राज्ञः पुरुष इति पदयो पृथक् स्वरोऽपि दृश्यते। यथा राजन् शब्दः कनिन्प्रत्ययान्तत्वेनञ्नित्यादिर्नित्यम् (पा० ६।१।१९७) इत्याद्युदात्तः।

पुरुषशब्दोऽपि फिट्स्वरेणाद्युदात्त इति द्वे अपि पदे आद्युदात्ते। समासे पुनरेकार्थीभावे समासस्य (पा० ६।१।२२३) इति समासान्तोदात्तत्वमित्येक एव स्वरः। शेषनिघातश्च भवतीति स्वरभेदोऽप्यस्ति।
अथैवं निन्द्यं निन्दयित्वोत्तमस्तुतिं प्रस्तौति—

स्वमुच्चैस्त्वमिति कस्मैचित् विशिष्याशक्यकथनगुणगौरवाय तस्मै कुशलमाधिव्याधिवैधुर्यं भूयादित्यर्थः। तस्मै कस्मै यः पुरुषवरः स्वं स्वकीयमुच्चत्वं महत्त्वमपरस्मै दत्ते, समधिकविनयविराजितस्नेहसुधामधुरावलोककलितालापदानमानादिना निरतिशयगुणगरिमख्यापनेन सङ्गतं यं कमपि[1] महान्तं करोतीत्यर्थः। अत्र दृष्टान्तः-आमन्त्रितमिव सुप इवेति। यथा सामन्त्रितम् (पा० २।३।४८, इति तत् कृतलक्षणमामन्त्रितपदमपरस्मै अपरस्मै पूर्वस्मै सुपे सुबन्ताय स्वमुच्यत्वमुदात्तत्वं दत्त इत्यर्थः। कुण्डेनाटन परशुना वृश्चन् इत्यादिषु सुबामन्त्रिते परांगवत्स्वरे (पा० २।१।२) इति वचनात् कुण्डेनेत्यादि सुबन्तस्य पदस्याटन्नित्याद्यामन्त्रित पदे परे पराङ्गवद्भावो मृत्पिण्डवदेकीभावो विधीयते तस्यैव तादात्म्यातिदेशात् समुदायैकामन्त्रितत्वादाष्टमिकमामन्त्रितनिघातं कुण्डेन इत्यादिपदात् परत्वेन प्राप्तं निवार्य षाष्ठिकमाद्युदात्तत्वं पूर्वस्मै कुण्डेनेत्यादिकाय सुबन्ताय पदाय दीयत इत्यर्थः ॥ २॥

---

१. कामपि इति क.।

अथ पुनरनेनैव छन्दसाभङ्ग्यन्तरेणान्यामाह--

**य इच्छेन्निर्व्याजं चिरमनुसृतानामुपकृती ।**
**विधातुं तद्रीतिं विविदिषुरशङ्कं पुनरसौ ॥**
**तदाचार्यं कुर्यादनुसृतसुबामन्त्रितपदम् ।**
**यदाधत्ते तत्र स्वविलसदुदात्तश्रियमपि ॥ ३ ॥**

यश्चिरमनुश्रितानामाश्रितानामुपकृतिमुपकारं विधातुं कर्त्तुं निर्व्याजं निष्कपटमिच्छेत् । कया रीत्योपकारो विधेय इति तद्रीतिं विविदिर्षुजिज्ञासुरसौ पुमान् अशङ्कं निर्भयं यथास्यात्तथा तदिति पाणिनिशास्त्रप्रसिद्धभामन्त्रितपदं आचार्यं कुर्यात् । कीदृशं तत् । अनुसृतसुप् अनुसृतं सुबामन्त्रिते परांगवत्स्वरे ( पा० २।१।२ ) इति पराङ्गमनुप्रविष्टं सुप् सुबन्तं येन सुबन्तपरस्थितमित्यर्थः ।

तत् किमित्यत आह—यदा धत्त इति । यत् आमन्त्रितपदं स्वस्मिन् विलसतीं दीप्यमानामुदात्तश्रियमुच्चैरुदात्तः (पा० १।२।२९) इत्युदात्तस्वरशोभां पराङ्गवद्भावान् मद्राणां राजन्निति मद्रपदे सुबन्ते आधत्ते आरोपयति । तथा च स्वकीयामपि महतीमपि श्रियमर्पयित्वा चिरमाश्रितानां दारिद्र्यमेव दूरीकरणीयमिति भावः ॥ ३ ॥

अथान्यां शार्दूलविक्रीडितेनाह--

**आनर्थक्यमुपेक्षते चिरतरं यः स्वाश्रितानामिह,**
**व्यर्थं तत्पुरुषो यथा सपुरुषेऽप्यर्थान्वितो जीवति ।**
**तस्यायुः परमेधतां बहुतरं साधोर्बहुव्रीहिवद्,**
**यः स्वार्थं गुणतां प्रयन्ननुसरत्यन्यार्थमेकं ततः ॥ ४ ॥**

अखण्डोऽत्र एष समसार्थः । पूर्वोत्तरपदयोस्तु वर्णवदानर्थक्यमिति सिद्धान्ताद्यथा तत्पुरुषः स्वाश्रितानां पदानामानर्थक्यमुपेक्षते तथा यः स्वाश्रितानामानर्थक्यमर्थराहित्यं दारिद्र्यमुपेक्षते स पुरुषोऽर्थान्वितोऽपि तेनार्थेन पुरुषार्थमसाधयन् मिथ्यैव जीवतीत्यर्थः ।

यथा बहुव्रीहिसमासः स्वार्थं गुणतामप्रधानतां नयन्नतितमामन्यार्थमन्यपदार्थमेव प्रधानतयाऽकांक्षति । तथा यः स्वार्थं स्वस्य धनस्यार्थं प्रयोजनं लोकप्रसिद्धं यदुपभोगरूपं तदमुख्यतां प्रापयँस्ततो धनादेकं मुख्यमन्यार्थं परार्थं सम्पादयति । तस्य साधोर्बहुतरमायुरेधतां वर्द्धतामित्युत्तरार्द्धार्थः ॥ ४ ॥

अथ मालिनीछन्दसापरामाह—

**इह वपुरपरं वा यत्परस्योपयुक्तम्,**
**कथय तदवशिष्टं नष्टमन्यत्समस्तम् ।**
**कथमपि यददन्तात्तातङांङ्गीकृतो हि,**
**कलयति न विलोपं लोपमन्यः प्रयाति ।। ५ ।।**

इह संसारे वपुः शरीरमपरं धनवसनादिकं च यत्परस्योपयुक्तं पराऽर्थं जातं तदेव वपुरादिकमवशिष्टमात्मार्थंमुर्वरितम् । तदाह व्यासः—

"विद्या तपो धनं शौर्यं कुलीनत्वमरोगिता ।
राज्यं स्वर्गश्च मोक्षश्च सर्वं धर्मादवाप्यते ।" इति

किंच यद्वस्तु परोपकाराय न जातं तत्समस्तमपि वस्तु नष्टं वृथा गतमिति कथय । धनजनगेहादि सकलं विनश्वरमिति परिभाव्यते न परोपकारमेव निरन्तरं साधयेत् । परलोकहितायेति भावः । उक्तं च व्यासेन—

**'यस्तु धर्मं परित्यज्य लोभादर्थमभीप्सते ।**
**स हेमराशिमुत्सृज्य पांशुराशिं जिक्षघृति ।।**
**किं धनेन विपन्नस्य यदन्यैः परिभुज्यते ।**
**परो धर्मः कृतो यस्तु मृतमप्यनुगच्छति ।।" इति ।।**

तत्रः दृष्टान्तः । कथमिति । यद्यस्माददन्तात् परो लोण्मध्यमपुरुषैकवचनं हि प्रत्ययस्तङा तातङादेशेन योऽङ्गीकृतः कवलितः स स्थानिवद् भावादप्यतो द्वेरित्येनेन भवतादित्यादौ लोपं कलयति प्राप्नोति । अन्यस्तु हिस्तातङादेशस्य विकल्पितत्वात्तदभावपक्षे यो हिर्भवेदित्यादौ स लोपं प्रयातीति दृष्टान्तार्थः यद्यप्यतोहेः ( पा० ६।४।१५ ) इत्यत्र हुझल्भ्यो-र्हेर्धिः ( पा० ६।४।१०१ ) इत्यतो हिग्रहणमनुवर्तते । तेनायमर्थः । हिरेव यो हिस्तस्य लोपो यथा स्यात् स्थानिवद्भावेन यो हिस्तस्य लोपो मा भूदिति भवतादित्यादौ नैव तल्लोपस्तथापि कविना पदोपयुक्तत्वमेवात्र हेतुरुपन्यस्तः । श्रीमद्भागवतेपि वृत्रबधार्थमस्थीनि याचमानान् देवान् प्रति प्रतिश्रुतदानेन ऋषिणाभिहितम्—

**"यो ध्रुवेणात्मना नाथ न धर्मं न यशः पुमान् ।**
**ईहते भूतदयया स शोच्यः स्थावरैरपि ।।**
**अहो दैन्यमहो कष्टं पार्थिवैः क्षणभङ्गुरैः ।**
**यन्नोपकुर्यादस्वार्थैर्मर्त्यः स्वज्ञातिविग्रहैः ।। इति"**

पारक्यैः श्वशृगालादिभक्ष्यैः । अस्वार्थैरात्मोपयोगरहितैः ।। ५ ।।

अथ वसन्ततिलकयान्यामाह—

**स्तोकादिवत् स्वयमनेकविभक्तिलक्ष्म्या,**
**युक्ताः स्फुरन्ति बहवोऽपि न ते परन्तु ।**
**दूरान्तिकादिवदिहोचितयाथ, लक्ष्म्या**
**शोभाङ्गता वत परानपि शोभयन्ति ।। ६ ।।**

ये पुरुषाः स्वयमात्मनाऽनेकाविभक्तयो विभागाः गजवाजिवसनविभूषणादयस्तद्वत्या लक्ष्म्या ये स्वयं शोभितास्ते बहवोऽपि सन्ति ह्यर्थमर्जयित्वा स्वयमेव भक्षयन्ति तादृशाः । किंवत् । स्तोकादिव । यथा करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ( पा० २।३।३३ ) एभ्योऽसत्ववचनेभ्यः करणे कारके तृतीयापञ्चम्यौ स्तः । स्तोकेन मुक्तः, स्तोकान्मुक्त इत्युदाहरणानि । अनेन हि पंञ्चमी मात्रं विधीयते । तृतीयाकरणे सिद्धैवास्ति तस्याः पञ्चमी विशेषविहितत्वात् बाधिका मा भूदिति वकारेणानुमोदनमात्रं क्रियते । अत्र स्तोकादयः शब्दाः शुक्लादिवद्द्रव्यमाहुर्गुणञ्च । तत्र यदा द्रव्यं गुणमुपसर्जनीकृत्योच्यते तदा सत्त्ववाचित्वात् स्तोकेन विषेण धनेन वा मुक्त इत्यादौ तृतीयैव । यदा तु गुण मात्रमभिधेयं तदाऽसत्त्वचनेति स्तोकमनायासेन मुक्त इत्यर्थः । यद्यप्येवं विधाः पुरुषाः सन्ति परन्तु ते तदृशाः पुरुषाः विरलाः कतिपय एव सन्ति ।

ते के । ये पुरुषा इह संसारे । उचितया वंशप्रतिष्ठायोग्यया तया हस्त्यश्वादिरूपया लक्ष्म्या स्वयं शोभाङ्गताः प्राप्ता सन्तः परानपि महोदारतया कृपालुतया च वत हर्षेण शोभयन्ति शोभा युक्तान् कुर्वन्ति, किंवत् । दूरान्तिकादिवत् । यथा दूरान्तिकार्थेभ्यो द्वितीया च ( पा० २।३।३५ ) दूरार्थेभ्योऽन्तिकार्थेभ्यश्च शब्देभ्यो द्वितीया भवति । वकारादप्राप्ते पञ्चमी तृतीये समुच्चीयेते । दूरं दूराद् दूरेण वा ग्रामस्य तथा सप्तम्यधिकरणे च ( पा० २।३।३६ ) । अधिकरणे कारके सप्तमी स्याच्चाद्दूरान्तिकार्थेभ्यः । दूरे । अन्तिके । एव दूरादयः शब्दाः द्वितीय-तृतीय-पञ्चमी-सप्तमी विभक्तिरूपया लक्ष्म्या संयुक्ताः सन्तो दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ( पा० २।३।३४ ) इति तद्योगे ग्रामस्य ग्रामादि षष्ठी पञ्चम्योर्विधानात् परानपि ग्रामादिशब्दानपि तादृशान् कुर्वन्तीत्यर्थः ।। ६ ।।

अथार्ययान्यामाह—

**अविचारितापराधाः परानुपकुर्वते किलोपकृतिशीलाः ।**
**न पुरस्कृतः प्रकृत्या तदपि तदर्थं बहुज्वदतिः ।। ७ ।।**

किल पुराणादौ श्रूयते। अविचारतोऽवगणितो लोकानां निन्दा परस्वाद्यपहरणादिकोऽपराधोऽन्यायो यैस्ते तथा प्रकृत्या स्वभावेन दुष्टैर्न पुरस्कृताः न सम्मानिता। एवं विधा अपि सत्पुरुषास्तदपि तथा सत्यपि तदर्थं तादृशदुष्टकार्यसिद्ध्यर्थमुपकृतिरूपं शीलं स्वभावो येषां ते सन्तः परानन्यान् शत्रूदासीनानुपकुर्वंत एव। अपराधावज्ञादि परकृतं विस्मृत्य तदुपकारं कुर्वंत एव। मित्राण्युपकुर्वंत इत्यत्र किं वाच्यमित्यर्थः। यथेन्द्र-कारितप्राणत्यागोऽपि दधीचिर्वृत्रासुरमारणरूपेन्द्र[1] प्रियं चिकीर्षुः स्वास्थीनि वज्रकरणार्थं ददाविति पौराणिकी कथा। क्वचित् परोपकृतिशीला इत्यपि पाठः। अत्र दृष्टान्तः। किंवत्। बहुज्वत्। यथा विभाषा सुपो बहुच् पुरस्तात्तु (पा० ५।३।६८) ईषदसमाप्तिविशिष्टेऽर्थे वर्तमानात् सुबन्ताद्विभाषा बहुचप्रत्ययः स्यात्। सच प्रकृतेः पुरस्तादेव न परतः। ईषदसमाप्तः पटु-र्बहुपटुः। विभाषाग्रहात् कल्पबादयोऽपि पटुकल्पः पटुदेश्यः पटुदेशीयः। महाविभाषया वाक्यमपि तु नियमार्थम्। पूर्वमेव सर्वं भवति प्रत्ययोत्पत्तेः प्रागेव प्रकृतेर्यल्लिंगवचनं च तत् उत्पन्नेपि प्रत्यये भवति सुब्ग्रहणं तिङन्तान्माऽभूत्। अत्र हि प्रकृत्या पटुशब्दरूपया परश्चेति वचनात् सामान्य-विहितं प्रत्ययपरत्वमिवाय अकज्वन्मध्यस्थितिमप्यविधाय पूर्वमेव पश्चाद् भाग एव विहितो बहुच् परप्रत्ययवदुपकृतिं कुरुते। यथा प्रकृतिगत[2] मीषद-समाप्तिरूपमर्थं वदति। चित इति प्रत्ययस्यान्तोदात्तत्वम् प्राप्तमपिना पचितः स प्रकृतेर्बह्वकजर्थमिति वार्तिकवद्वचनात् पटुशब्दाकारमेवान्तोदात्तं विदधाति चेति परोपकृतिशीलत्वम्॥ ७॥

अथार्यंयान्याभाह—

**अर्थिसमेताः समये यद्यपि बहवोपि तद्धिताः सन्ति।**
**विरलः स कोपि यस्मादुदयति सततं समाश्रितातिशयः॥ ८॥**

तेभ्यो हितास्तद्धिताः। अर्थिभ्यो हिताः पुमांसः समये तुलादि-महादानसमयेऽर्थिसमेताः याचकबाहुल्ययुक्ता बहवो यद्यपि सन्ति महा-दानादि समयेऽर्थिभ्यः सर्वेपि प्रयच्छन्ति परन्तु स तादृशः कोप्यनिर्ज्ञात-स्वरूपो विरलः स्वल्प एवास्ति। स कः। यस्मात् पुरुषात् सततं सर्वकालं समाश्रितानां दानमानादिसत्कारैः अतिशयः प्रतिष्ठोत्कर्षः उदयति, न त्वतिपरिचयादनादरं करोति तादृशः विवेकी कश्चिदेवास्ति।

१. रूपेन्द्रियप्रि० इति क०।
२. गति० इति क०

व्याकरणपक्षे — अर्थिभिर्लक्षणयाऽर्थप्रत्यायनेच्छावद्भिः समेताः प्रयुज्यमानास्तद्धितप्रत्यया अणादयो बहवः सन्ति। औपगवः। दाक्षिः। गार्ग्यः इत्यादिष्वणिञ्यञ् प्रत्ययादयः। एते ह्यपत्यादिकमर्थं वदन्ति, नतु प्रकृतिगतमतिशयम्। यस्मात्तु तद्धितप्रत्ययात् समाश्रितस्य प्रकृतिभागस्यातिशय उदेति प्रकाशते स तमबादिस्तद्धितप्रत्ययो विरलः परिमित एवेत्यर्थः। यथा—अतिशायने तमबिष्ठनौ (पा० ५।३।५५)। सर्वे इमे आढ्याः। अयमेषामतिशयेनाढ्य आढ्यतमः। तथा द्वाविमावाढ्यौ। अयमनयोरतिशयेनाढ्य आढ्यतरः। पटीयान्। अत्र द्विवचनविभज्योपपदे तरबीयसुनौ (पा० ५।३।५७) इति तरप्ईयसुन् च विधियते। एवं चत्वार एव प्रत्ययाः।

ननु शुक्लतरः पट इत्यत्र प्रकृतिभागस्य शुक्लशब्दस्य गुणवाचकस्य कः प्रकर्षो गुणे गुणानङ्गीकारात्[1]। सत्यम्। अभिधेयविशेषणत्वेनोपात्तस्य शुक्लादेर्धर्मस्य प्रकर्षसंभवात्तत्प्रकर्षद्वारेणोपचरितो द्रव्यस्य स्वतोऽप्रकृष्टस्य प्रकर्षः शुक्लतरः पट इत्यादौ प्रत्ययेनाभिधीयते। तदुक्तं हरिणा।

**द्रव्यस्याव्यपदेशस्य य उपादीयते गुणः।**
**भेदको व्यपदेशाय तत्प्रकर्षोऽभिधीयते ॥**
**अरूपं पररूपेण द्रव्यमाख्यायते यथा।**
**अप्रकर्षं प्रकर्षेण गुणस्यापीष्यते तथा ॥ इति ॥**

यद्यपि द्रव्ये बहवो गुणाः सन्ति तथापि शुक्लतरः पट इत्यादावन्तरङ्गत्वात् प्रकृत्तिवृत्तिनिमित्तगुणप्रकर्षाश्रय एव तरबादिः प्रत्ययो ध्येय इति तत्त्वम् ॥ ८ ॥

अथोपजात्यापरामाह—

**को वा न शक्नोति कयापि रीत्या समाश्रितस्योपचये परन्तु।**
**यस्यास्ति विश्वोपचये प्रवृत्तिः समित्रशब्दो हि विभाति कश्चित् ॥**

को वा विवेकी पुमान् समाश्रितं वर्द्धयितुमिति यावत्। कया रीत्या दानेन माने दापनेन वा शक्नोति अपितु सर्वोऽपि शक्नोति परन्तु यस्य सत्पुरुषस्य विश्वोपचये सर्वस्याश्रितस्यानाश्रितस्य वा वृद्धौ प्रवृत्तिः स कश्चिदेव विभाति, न सर्वः। तथा चोक्तम्—

**अयं निजः परो वेति गणना लघुचेतसाम्।**
**उदारचरितानान्तु वसुधैव कुटुम्बकम् इति ॥**

---

१. गुणे गुणानङ्गीकारेऽपि प्रकर्षस्य सत्त्वे बाधाभावात्। वैयाकरणैरस्यास्वीकाराच्च।

तत्र दृष्टान्तः। मित्रशब्दो हीति। हि शब्द इवार्थे। यथा मित्रशब्दे विभाति। यस्य मित्रशब्दस्य विश्वोपचये विश्वशब्दस्याधिक्ये दीर्घत्वे प्रवृत्तिर्भवति। यथा मित्रे चर्षौ। (पा० ६।३।१३०) मित्रशब्दे पदे ऋषावभिधेये विश्वशब्दस्य दीर्घो भवतीति। विश्वामित्रः। स कश्चिदेव गाधिसूनुरुच्यते। यस्त्वनृषिः स विश्वमित्र इत्येव भवति॥ ४॥

अथ स्वागतयाऽपरामाह—

**साधयन्तु सुधियः परकार्यं प्रत्ययः स्फुरति यावदबाधः।**

**अङ्गकार्यमपि हन्त न शक्यं प्रत्यये तु सहसैव विलुप्ते॥ १०॥**

कार्यमिति जातावेकवचनम्। न विद्यते बाधो यस्या यावदबाधस्तादृशः प्रत्ययो ज्ञानं यावदस्ति। जरयेन्द्रियशक्तिवैकल्याद्धानिर्यावन्नोत्पन्नेत्यर्थः[1]। तावत्परेषां कार्याणि।

**परोपकारहीनस्य धिङ् मनुष्यस्य जीवितम्।**
**जीवन्तु पशवो येषां चर्म्माप्युपकरिष्यति॥**
**"दानं क्रियोदात्तवाचः, कीर्तिधर्मौ तथायुषः।**
**परोपकरणं कायादसारात् सारमुद्धरेत्॥**

इत्यादिवचनविचाररुचिरां धियं धारयन्तः सुधियः साधयन्तु। विहायालस्यादिकमतियत्नेनापि सिद्धिं नयन्त्वित्यर्थः। तत्र हेतुमाह— अङ्गकार्यमिति! इह जरायां स्नानाद्यङ्गकार्ये शक्त्यपगमात् सुखेन न शक्यं कर्त्तुं परकार्यम्।

ननु जरायां सर्वोऽप्यपदुःस्यादिति नियमाभावात्तस्य भावस्तत्कार्यमित्याशंक्याह—प्रत्यये चेति। चकारः समुच्चये। अपरं मरणं मूर्च्छया प्रत्यये संज्ञाने सहसा विलुप्ते वदनान्तःप्रविशनाक्षिकोत्सारणाद्यङ्ग कार्यं न शक्यं किं पुनः परकार्यमित्यर्थः।

सहसेत्यनेन जराधिगमे प्रमाणाभावात्तारुण्य एवायुर्व्ययसंभवादुपकाररूपं धर्मं प्रतित्वरैव कार्येत्युक्तं भवति। उक्तं च महाभारते—

**"अप्रमत्तेन सहसा धर्मः कार्यो विजानता।**
**सहसा मरणे प्राप्ते धर्मः कर्त्तुं न शक्यते॥**
**अद्यैव कुरु तच्छ्रेयो मास्म कालो ह्यगादयम्।**
**अकृतेष्वेव कार्येषु मृत्युर्येषां प्रकर्षति॥**
**जरां व्याधिं च मृत्युं च को हि जानन्नचेतनः।**
**स्वस्थस्तिष्ठेन्निषीदेद् वा स्वपेद्वा कः पुनः हसेत्॥**

---

१. द्धान्तिः ० इति क०।

म्रियन्ते जन्मने मुढा जायन्ते मरणाय वा।
न धर्माय न मोक्षाय तृणानीवेतरे जनाः॥
इदं जरा कलेवरं विजर्जरीकरोति ते।
बलाङ्गरूपनाशिनी निधत्स्व सौकृतं निधिम्॥
धनस्य यस्य राजतो भयं न वास्ति चौरतः।
मृतश्च यन्न मुञ्चति त्वमर्जयस्व तद्धनम्॥
सहस्रशोपि पुत्रक! ब्रबीमि तत्तदेव ते।
अशाश्वतं हि जीवितं कुरुष्व धर्ममादृतः॥

इति शुकं प्रति व्यासोक्तिः।

यस्य वा मृत्युना सख्यं यो वा स्यादजरामरः।
तस्येदं युज्यते वक्तुमिदं श्वो मे भविष्यति॥
इदं श्वो नेदमद्येति नैतन्मर्त्यस्य युज्यते।
अवश्यं भविता हि श्वो न तस्मिन् भविता भवान्॥
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्।
नहि प्रतीक्षते मृत्युः कृतं वास्य न वा कृतमिति॥

अथवा राजाधिकारणं प्रतीदमुच्यते– भो सुधियः तावत् परस्याश्रितस्यानाश्रितस्य वा कार्यं साधयन्तु। यावत् भवत्प्रभोर्मनसि बाधारहितः समीचीनोऽयं कार्यकर्त्ता न धौरयो न पिशुनइत्येवं प्रत्ययो विश्वासः स्फुरति। पिशुन द्वारा प्रभोर्विश्वासे सहसैव विलुप्ते अङ्गकार्यमपि न शक्यं किं पुनः परकार्यम्।

व्याकरण-पक्षे तु भो सुधियः परसम्बन्धिकार्यं पूर्वस्य साधयन्तु तावत् यावदबाधोलोपादिरहितः प्रत्ययः स्फुरति श्रूयते। यथा हरयः शंभवः इत्यत्र हरिप्रभृतिभ्यो जसि निर्बाधे पुरः स्थिते सति जसि चेति (पा० ७।३।१०९) गुणो भवति। तत एचोयवायावः (पा० ६।१।७८) इत्ययावादेशौ। कति ब्राह्मणा' इत्यत्र तु कतिशब्दात् डति चेति (पा० १।१।२५) कृतषट्संज्ञकात् परस्य जसः सर्वविधिभ्यो लुग्विधिवलवानित्युक्तेः प्राग्गुणात् षड्भ्यो लुगिति जश्शसोर्लुक्संज्ञकप्रत्ययादर्शने जाते सति ततो जसः परत्वाभावाद् गुणो न भवति।

ननु प्रत्ययलोपे प्रत्ययलक्षणम् (पा० १।१।६२) इतिलुप्तप्रत्ययाश्रितं कार्यं भविष्यतीति चेन्न। न लुमताङ्गस्य (पा० १।१।६३) इति निषेधात्। तथा राज्ञः पुरुष इत्यत्र यावत् राज्ञः षष्ठ्येकवचनं निर्बाधं

तावत् सुधियो वैयाकरणाः स्वादिष्वसर्वनामस्थाने ( पा० १।४।१७ ) इति प्राप्तां पदसंज्ञां बाधित्वा विशेषविहितत्वाद् यचि भम् ( पा० १।४।१८ ) इति भसंज्ञां विधायाल्लोपो न इति, भसंज्ञाकार्यं विधीयते ।

परोऽवयवापेक्षयोत्कृष्टो यः समुदायो राज्ञ इति सुबन्तं पदमिति पदसंज्ञारूपकार्यं साधयन्तु । राजपुरुष इत्यस्यां वृत्तौ तु सुपो धातुप्रातिपदिकयोः ( पा० २।४।७१ ) इति ङसो लुकि सति प्रत्ययलोपे प्रत्ययलक्षणम् ( पा० १।१।६२ ) इतिप्राप्ता तुल्यावधिकपदसंज्ञा वाधिका भसंज्ञा न भवति । न लुमताङ्गस्य ( पा० १।१।६३ ) इति निषेधात् । अतो अल्लोपोनः ( पा० ६।४।१३४ ) इति भसंज्ञाकार्यं न भवति, या तु प्रत्ययलक्षणेन सुबन्तं पदमिति पदसंज्ञा सा भवत्येव । अत्र नलुमताङ्गस्य ( पा० ६।४।१ ) इति निषेधो न प्रवर्तते । न हि पदसंज्ञाङ्गस्य कार्यम् । अत एवाङ्गस्येति किं पंच सप्तेत्यादि प्रत्युदाहृतम् । जयादित्येनेत्यतो नलोपः प्रातिपदिकान्तस्य ( पा० ८।२।७ ) इति नकारलोपो न भवति ।

अथोत्तरयापि स्वागतयान्यामाह—

**पारतन्त्र्यमपि साधु गुणाय स्वीकृतं भवति शोभनमेव ।**
**येन तादृगपि शास्त्रसमूहे शोभते परित इक् परिभाषा ।। ११ ।।**

स्वातन्त्र्यं मोक्षः[१] पारतन्त्र्यं[२] बन्ध इत्युक्तेस्तादृशमपि स्वेच्छाहारविहाराभावाद् दुःखमपि पारतन्त्र्यं पराधीनत्वं शासति लोकान् पालयन्ति ते शास्त्राः राजानः । उणादयो बहुलम् ( पा० ३।३।१ ) इति शासेः कर्त्तरि त्रप्रत्ययः । तेषां समूहे राजसमाजे साधुगुणाय साधूनां सत्पुरुषाणां गुणायोपकृतये स्वीकृतमङ्गीकृतं चेद् भवति तर्हि शोभनमेव सम्यगेव । येन कारणेन तस्मिन्नङ्गीकृते तादृक् स पुमान् शोभते ।

तदुक्तं काशी खण्डे—

**''परोपकरणं येषां जागर्ति हृदये सताम् ।**
**नश्यन्ति विपदस्तेषां संपदः स्युः पदे पदे ।।**
**तीर्थस्नानैर्न या बुद्धिर्बहुदानैर्न तत्फलम् ।**
**तपोभिरुग्रैस्तद्धर्ममुपकृत्या यदाप्यते ।।**

१. अयं मोक्षपदार्थः सर्ववादिसम्मतः ।

२. पारतन्त्र्यं बन्धः । तत्र न परपदेन शास्त्रस्य राज्ञो का ग्रहणम् किन्तु परशास्त्रस्य तदनुयानिनो राज्ञः ।

**परोपकृत्या यो धर्मो धर्मो दानादिसंभवः ।**
**एकत्र तुलितौ धात्रा तत्र पूर्वो भवद्गुरुः ॥**
**परिनिर्मथ्य वाग्जालं निर्णीतमिदमेव हि ।**
**नोपकारात् परो धर्मो नापकारादघं परमिति ॥**

अतः केवलं स्वोदरपूर्त्तये तु स्वीकृतं पारतन्त्र्यं धर्मयशसोः परिपन्थित्वादशोभनम् । परा निष्ठा याङ्गीकृतमत्यशोभनमिति किमु वक्तव्यम् । अत्र दृष्टान्तः । यथा इको गुणवृद्धी ( पा० १।१।३ ) इतीक् परिभाषा परितः शास्त्रे समूहे सम्पूर्णे पाणिनिशास्त्रे शोभते । ययेक्परिभाषया साधूनां भवति चेततीत्यादीनां शब्दानां गुणाय गुणाख्यकार्याय स्वीकृतं सार्वधातुकार्द्धधातुकयोः ( पा० ७।२।८४ ) इत्यादिविधीनां पारतन्त्र्यमिक इत्यस्य षष्ठ्यन्तस्य पदस्योपस्थानेनाङ्गत्वं स्वीकृतमात्संध्यक्षरव्यञ्जननिवृत्यर्थम् । गुणशब्दो वृद्धेरप्युपलक्षणम् । तेन वृद्ध्यर्थमचैषीद्, अहौषीत् इत्यादौ सिचिवृद्धिः परस्मैपदेषु ( पा० ७।२।१ ) इत्यादिविधीनामपि पारतन्त्र्यं प्राग्वदङ्गीकृतम् ।

नन्विदं स्वतन्त्रमेव सूत्रं दध्निमध्वित्यादौ गुणवृद्धिविधायकमस्तु किं पारतन्त्र्येण । नचैवं सार्वधातुकार्द्धधातुकयोः ( पा० ७।३।८४ ) सिचिवृद्धिः परस्मैपदेषु ( पा० ७।२।१ ) इत्यादिविधिवैयर्थ्यं स्यादिति वाच्यम् ।

याता वाता गायति उम्भित इत्यादावनिकोपि गुणवृद्ध्यर्थं तत्स्यात् । एवं तर्हि गुणवृद्ध्यधिकारे पुनर्गुणवृद्धिग्रहणान्न विधिः । यद्यप्यनुवर्त्तमानं गुणवृद्धिग्रहणं संज्ञापरमिह तु अनुवृत्तिसामर्थ्यात् संज्ञिपरं भविष्यति । अदेङ् गुणः ( पा० १।१।२ ) इत्यत्र चानुवर्त्तमानं वृद्धिग्रहणं न सम्बध्यते । अन्यसंज्ञोक्तेश्चकाराकरणाच्च । अतएवाधिकारोपि न भवति । प्रतिज्ञास्वरिताः पाणिनीयाः[1] इत्युक्तेः । स्वरितत्वमपि नास्तीत्यतोस्य सूत्रस्य[2] परिभाषात्वमेव सिद्धान्तितम् ॥ ११ ।

अथापरामाह—

**स्थानिवद्भाववद् भाति स्वाश्रयेणाञ्चितः सदा ।**
**यः सदा परकार्याणां साधुः साधयिता स्वयम् ॥ १२ ॥**

यः सर्वदा परेषां यानि कर्याणि तेषामात्मीयानामिव स्वयमात्मना साधयिता निष्पादयिता स एव साधुः सत्पुरुष इति वाच्यम् । यस्तु तत्रोदासीनः स तु विषमदर्शी न साधुशब्दवाच्यः ।

---

१. स्वरितेनाधिकारः ( पा० १।३।११ ) इत्युक्तेरित्यर्थः ।
२. इको गुणवृद्धी ( पा० १।१।३ ) इति सूत्रस्येति भावः ।

स एव पुनः स्वस्य धनस्याश्रयेणाश्रयतया धनवत्तया लोकैरञ्चितो दानमानसत्कारैः पूजितो महतां समाजे सदा सर्वकालं इह जन्मनि जन्मान्तरे च भाति शोभते । अत्र दृष्टान्तः । स्थानिवद्भाव इव । यथा स्थानिवददेशोऽनल्विधौ ( पा० १।१।५६ ) इति वचनेन स्थानिकार्यमादेशे प्राप्नोतीत्यतिदेश आरभ्यते । यथा वृक्षायेत्यत्र वृक्षशब्दाच्चतुर्थ्यैकवचनस्य ङे इत्यस्य ङेर्यः ( पा० ७।१।१३ ) इति यादेशे सुपि च ( पा० ७।३।१२ ) यञादौ सुपि परेऽतोऽङ्गस्य दीर्घः स्यादिति स्थानिकार्यस्य सुप्त्वस्यातिदेशादादेशाश्रयं च यञादित्वमाश्रित्य दीर्घो भवति । यथा ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमित्युक्ते ब्राह्मणप्रयुक्तमग्रचभोजनं क्षत्रिये प्रवर्त्तते स्वाश्रयं च युद्धादीनां न निवर्त्तते, किन्तु प्रवर्त्तत एव । एवं स्थानिवद्भावोपि पर आदेशादन्त्यः स्थानी, तत्प्रयुक्तानां कार्याणां सुप्त्वादीनां साधयिता स्वाश्रयेण यञादित्वादिना प्रयोगसिद्धयर्थं शिष्टैरादृतश्च भवतीत्यर्थः ।। १२ ।।

अथेतरामाह —

**परकार्याण्यनलसः स्वरादेशातिदेशवत् ।**
**हेतवोप्यङ्ग खेदेषु साधयेत् साधुतां वहन् ।। १३ ।।**

अनलसः श्रेयः साधनपरिपन्थि आलस्यमात्मधिया त्यजन् तथा साधुतां सत्पुरुषताभिधानं वहन् पुमान् परेषां कार्याणि साधयेन्निष्पादयेदेवेत्यर्थः । सर्वं वाक्यं सावधारणं भवतीति न्यायात् ।कीदृशानि परकार्याणि । अङ्गानां करचरणमुखादीनां खेदेषु क्लेशेषु हेतवः कारणानि । हेतुर्ना कारणं बीजमिति (अकोष) हेतुशब्दो नित्यपुंलिगः। क्रियमाणेषु हि परकार्येषु राजादि गृहे गमनाद् वाग्व्यापाराच्च स्वतोपि द्रव्यदानाच्च शरीरक्लेशः स्याद् यद्यपि तथापि साधुत्वनिर्वाहार्थमगणिताङ्गखेदः सन् परकार्याणि कुर्यात् ।

अत्रानलस इत्यत्राङ्गखेदेष्वित्यत्र च श्लेषमाश्रित्य स्वरादेशातिदेशवदिति दृष्टान्तः । स्वरशब्देना[1]जुच्यते । तस्यादेशोऽजादेशस्तस्यातिदेश इव ।

अयमर्थः --अचः परस्मिन्पूर्वविधौ ( पा० १।१।५७ ) इत्यतिदेशोऽनलसः अङ्गखेदहेतवोऽपि परकार्याणि स्थानिकार्याणि यथा साधयतीत्यर्थः। अत्र अनलस इत्यस्यायमर्थः । अस्यतीति असः । पचाद्यच् । अलः असः अलसः षष्ठी समासः । अलसस्यतीत्युपपदसमासे कर्मण्यण् ( पा० ३।२।१ ) इत्यण्यलस इति स्यात् न अलसोऽनलसः स्थान्यलाश्रयिणि कार्ये प्रवर्त्तमान इत्यर्थः ।

---

१. स्वराणामक्षु राठादित्यर्थः । अचः स्वरा इत्युक्तेश्च ।

पूर्वसूत्रे[१]गादेशे स्थानिकार्यमतिदिष्टमिह तु स्थानिनि सति पूर्वस्य[२] यत्कार्यं तदादेशेपि सति पूर्वस्य भवतीत्यतिदिश्यते। एवं सत्यल्विध्यर्थमारम्भणीयं सूत्रमित्युक्तं भवति। ततश्च वव्रश्चेत्यत्र वृश्चतेर्लिटचभ्यासस्योभयेषाम् (पा० ६।१।१७) इतिरेफस्य ऋकारे संप्रसारणे उरदत्वे हलादिशेषे च कृते वकारस्यापि सम्प्रसारणं प्राप्नोति तस्य न संप्रसारणे सम्प्रसारणम् (पा० ६।१।३७) इति प्रतिषेधः। स्थान्यलाश्रयोप्यस्माद् वचनाद् भवति।

ननूरदत्वस्यापरनिमित्तकत्वात् कथं स्थानिवद्भावः। उच्यते; उरदित्यस्याङ्गाधिकारे पाठादङ्गेन स्वनिमित्तस्य प्रत्ययस्याक्षेपात् परनिमित्तमुरदत्वं भवति। अथाङ्गखेदेष्वित्यनेनाल्विधेरुदाहरणमसूचि। तथाहि। यातेर्यङन्तात्कृतद्विर्वचनात् क्तिच्यतो लोपे यलोपविधिं प्रति स्थानिवत्वं प्रतिषेध्ययङो लोपे च यायाति इति स्थिते यङोऽकारलोपस्य स्थानिवत्वादातोलोप-इटि च। (पा० ६।४।६४) इत्यालोपे पुनर्य[३]लोपे च यातिरिति भवति। तत्र चालोपयलोपौ प्रति हेतू भवता यङकारलोपेन न स्थानिवद्भावेन यातिरिति या मात्रेऽवशेषिते परस्मिन्नित्यकारे सति यत्कार्यमातो लोपलक्षणं तद्यापरत्यस्याङ्गखेदो दैन्यं तत्प्रतिहेतुर्भवति। स च स्थानिवद्भावः स्थान्यलाश्रयो भवति। तत्र पुनराकारलोपः, पुनश्च यकारलोप इति प्रत्ययमात्रश्रवणप्रसङ्गेनोद्भावनीयः। अतोलोपस्य स्थानिवद्भावात् चिणो लुङ्न्यायेनासिद्धत्वाच्चेत्युदाहरणमिति, दिक्।

अथोपजातिकयान्यामाह--

**सासन्न सन्नेव विधातुमीष्टे परेष्टमादेश इव स्वतो यः।**
**स्थानीव सोऽसन्नपि सन् लभन्ते यन्नामतोऽन्येपि च तं समर्थम्॥१४॥**

स पुमान् सन्नपि जीवन्नपि असन्नेव मृत इत्येव ज्ञेयः।

सः कः यः शक्तिमानपि स्वतः परेषां लोकानामाश्रितानां वेष्टमभिमतं वाञ्छितं साधयितुं नेष्टे नेच्छति। क इव। आदेश इव। अजादेश इव। यथा पटुमाचष्टे पटयतीत्यादौ णाविष्ठवत्प्रातिपदिकस्येति वार्तिकेनेष्टवत्कार्यातिदेशाद् वा (पा० ६।४।१५५) इति टिलोपे कृते णित्वात् प्राप्ताम् अत उपधायाः (पा० ७।२।११६) इत्युपधावृद्धिमजादेशः परनिमित्तकः स्थानिवदेवेति हेतोः साधयितुं न शक्नोतीत्यर्थः। स्थानीवेति स पुमान् असन्मृतोपि सन्नेव जीवन्नेव ज्ञेयः। स कः। वयममुकसूनवोऽमुकगुरवोऽमुक-

---

१. स्थानिवदादेशोऽनल्विधौ (पा० १।१।५६) इति सूत्रेणेत्यर्थः।

२. पूर्वस्येत्यस्य पूर्वत्वेन दृष्टस्येत्यर्थः।

३. प्रकृतिभूतस्य द्वित्वेन द्विधाभूतस्येत्यर्थः।

सुहृद इत्येवं यस्य मृतस्य नामतोऽप्यन्ये ये केचनापि पुरुषाः स्वमहिम्ना लब्धुमसमर्था अपि तं तमभिमतमर्थं लभन्ते । तत्र दृष्टान्तः—स्थानीवेति—यथा वव्रश्चेत्यादौ स्थानिनाम्नैव। न संप्रसारणे सम्प्रसारणम् (पा० ६।१।३७) इति संप्रसारणनिषेधलक्षणमभिमतं कार्यं लभ्यत इत्यसन्नपि स्थानी सन्नेव ज्ञायते । यद्वा । आदेशं इति सामान्यग्रहणं तेनास्तेर्भूः (पा० २।४।२२) इत्यादेशो, वव्रश्चेत्यादौ सम्प्रसारणादेशश्च यथा परेषां प्रयोगसिद्ध्यर्थं प्रकृतानां इष्टं धातुसंज्ञानिबन्धनं सम्प्रारणनिषेधरूपं च कार्यं स्वयं विधातुं न शक्नोति । स्थानिनाम्ना चातिदेशवशाल्लभ्य इत्यर्थः ॥ १४ ॥

अथ स्वागतयान्यामाह—

**तत्परा हि गणयन्ति परार्थे साधवो न विविधामपि हानिम् ।**
**नो ततस्त्रसति राजपदं चेत् स्वादिभिर्गणनया च वियुक्तम् ॥१५॥**

परार्थे परकार्ये तत्परास्तात्पर्यवन्तः साधवः परार्थे साध्यमाने यदि विविधा हानिरपि जायेत तदा हीति निश्चितं तामपि न गणयन्ति । अत्र दृष्टान्तः । राजपदं राजपुरुष इत्यत्र परार्थे परस्यपुरुष पदस्य योऽर्थस्तत्परं परार्थाभिधानां वृत्तिरिति विशेषणत्वाद् भवतस्तत्समासे सुपो धातुप्रातिपादिकयो (पा० २।४।७१) इति सुब्लोपविधानात्स्वादिभिः प्रत्ययैर्वियुक्तं रहितं भवति । तथा गणनया एकद्वित्र्यादिसंख्याविशेषेण च वियुक्तं भवति । यतो राजपुरुष इति समासेऽभेदैकत्वसंख्याया अवगमाद्राज्ञः राज्ञो राज्ञमिति संख्याविशेषानवगतिरित्युक्तत्वात् तथापि ततः परार्थताया नो त्रसति नोद्वेगमायाति ॥ १५ ॥

अथ शार्दूलविक्रीडितेन तामाह—

**एतस्मिन् वसुधातले कति न सत्पाणीयशास्त्रोपमा,**
**विख्यातान् परितोऽपि ये परिचितान् सम्भावयन्त्यादरात् ।**
**ये स्वीयामपि सिद्धिमुन्नतिधियो धिक्कृत्य सत्कुर्वते,**
**सर्वानेव कलौ पुनस्त्रिचरणी[1] शास्त्रोपमास्ते क्वचित् ॥१६॥**

एतस्मिन् भूमण्डले ये पुरुषान् परितः ख्यातान् कुलशीलादिना प्रसिद्धानपि सहाध्ययनोपवेशनभोजनादिप्रकारैः परिचितान् प्राप्तसम्बन्धानादरात् संभावयन्ति अपरिचितांस्तु प्रसिद्धानपि नैव सम्भावयन्ति ते पुरुषाः कति न सन्ति । अपितु बहव इत्यर्थः ।

---

१. त्रिपादीशास्त्रमित्यर्थः

कीदृशाः । आभीयशास्त्रोपमाः श्नान्नलोपः ( पा० ६।४।२३ ) इत्यारभ्य भस्येत्यधिकारान्तं ग्रन्थं यावदाभीयं शास्त्रं तत्तुल्यः । यथा असिद्धवदत्राभात् ( पा० ६।४।२२ ) । इत ऊर्ध्वमापादसमाप्तेराभीयम् समानाश्रये तस्मिन् कर्तव्ये तदसिद्धं स्यात् । तत्कार्यं परिचितमाभीयमेव संभावयति न पुनर्विख्यातमपि प्रकरणान्तरस्थमपरिमितं सत्करोति । तत्पक्षे आदरस्तु स्वयमसिद्धिमपि प्राप्य परस्मै अवकाशदानमेव । तत्र एधि, शाधि इत्यत्र घ्वसोरेद्धावभ्यासलोपश्च ( पा० ६।४।११९ ) शाहौ ( पा० ६।४।३५ ) इत्येताभ्यामेत्वशाभावयोः कृतयोस्त्रलंतत्वात् प्राप्तं हुझल्भ्यो हेर्धिः(पा० ६।४। १०१ ) ङिति धित्वमसिद्धवदत्राभात् (पा० ६।४।२२) इत्यसिद्धावेत्वशाभावौ सम्पादयतः । तच्च धित्वशास्त्रमाभीयतया समानाश्रयतया च परिचितमिति सत्कृतं तेन । एवं जहि इत्यत्र हन्तेर्हौ परे हन्तेर्जः ( पा० ६।४।३६ ) इति जादेशे कृतेऽतोहे ( पा० ६।४।१०५ ) इति भवत्यादिवल्लुक् प्राप्नोत्यसिद्धवत्वान्न भवति । अभाजि । राग इत्यनयोरुदाहरणयोस्तु भञ्जेश्चिणि ( पा० ६।४।३३ ) घञि च भावकरणयो; ( पा० ६।४।२७ ) इत्येताभ्यां भंजिरञ्ज्योर्नकारलोप (पा० ७।२।११६) आभीयोऽप्यनाभीये अत उपधायाः ( ७।३।११६ )इति दीर्घे विख्यातेप्यपरिचितत्वादसिद्धो न भवतीति तस्य सत्कारको न भवतीत्युच्यतेऽतो वृद्धिरभूत् ।

ननु तर्हि के सत्पुरुषा इत्याशंक्याह—ये इति । उन्नता उदारा धीर्येषां ते पुरुषा स्वीयां स्वसम्बन्धिनीं कार्यसिद्धिं धिक्कृत्यावगणय्य सर्वानेव परिचितानपरिचितांश्च पण्डितान् दानमानादिभिः सत्कुर्वते मानयन्ति । ते पुरुषाः अस्मिन् कलियुगे क्वचित् न सर्वत्र । कीदृशाः । त्रिचरणीशास्त्रं त्रिपादी शास्त्रं पूर्वत्रासिद्धम् ( पा० ८।२।१ ) इत्यारभ्य चरणत्रयरूपं उपमा येषां तत्तुल्या इत्यर्थः । तच्छस्त्रं परिचितं त्रिपादीस्थमपि पूर्वं स्वासिध्या सत्करोति तथा सपादसप्ताध्यायीस्थमपि शास्त्रं सत्करोति । यथा—अमुष्मै अमुष्मादित्यादिष्वदः शब्दात् ङे ङसीत्यादौ त्यदादीनामः ( पा० ७।२।१०२ ) इत्यदन्तत्वनिबन्धनं सर्वनाम्नः स्मै ( पा० ७।१।१३ ) ङसिङ्यो स्मात्स्मिनौ ( पा० ७।१।२५ ) इत्येताभ्यां स्मै स्मादित्यादिकं सपादसप्ताध्यायीस्थं विधिं प्रति अदसोऽसेर्दादुदोमः ( पा० ८।२।८० ) इत्युत्वं मत्वञ्च स्वयमसिद्धं भूत्वा तद् भावयति पश्चाद् स्वयं भवतीति सर्वसत्कारकृतान्तेषामुपमा युक्ता । तत्र सिद्धस्यासिद्धतायाः कर्तुमशक्यत्वेनातिदेशाश्रयणम् । एवमस्मै उद्धरेति स्थिते एचोयवायावः इत्ययादेशे लोप शाकल्यस्य ( पा० ८।३।१९ ) इति यलोपस्तस्यासिद्धत्वादाद्गुणः ( पा० ६।१।८७ ) इत्यादिकार्यं न भवति । अस्मानुद्धरेत्येव भवति । सपादसप्ताध्यायीस्थं कार्यं प्रत्युदाहणद्वयं दर्शितम् । त्रिपाद्यां तु गुडलिहामा-

नित्युदाहरणम् । तथाहि गुडंलिहन्तीतिगुडलिहः । क्विप् च ( पा० ३।२।७६) इति क्विप् । गुडलिहो विद्यते यस्मिन्नित्यर्थे तदस्यस्तीत्यनेन मतुप् । ततोमतुप्-निमित्तायां पदसंज्ञायां होढ; (पा० ८।२।३१) इति हस्य ढत्वे झलां जशोन्ते ( पा० ८।२।३९ ) इति जश्त्वे च मधुलिडमत् इति स्थिते तु यः अयन्तादुत्तर-स्थमतोर्मस्य च ढः स्यादिति त्रिपादीस्थं वत्वं त्रिपादीस्थयोर्ढत्वजश्त्वयोर-सिद्धत्वान्न भवति । ततो यरोऽनुनासिकेऽनुनासिको वा ( पा० ८।४।४५ ) इति सूत्रे तद्धित प्रत्ययो भाषायां नित्यवचनमिति णकारो नित्यं भवति ।

एवं क्षै संक्षये अस्मात्कर्त्तरि निष्ठायां क्तप्रत्ययेऽस्य क्षायो म ( पा० ८।२।५३ ) इति मत्वे क्षामस्तस्यापत्यं क्षामिः क्षामोऽस्यास्तीति । क्षामी क्षामिः क्षामी वा यस्यास्तीति क्षामिवान् पूर्ववन्मतुप् । अत्र क्षायो म ( पा० ८।२।५२ ) इति मत्वस्यासिद्धत्वात्मादुपधायाश्च मतोर्वोऽयवादिभ्यः ( पा० ८।२।९ ) इति वत्वं न भवति । क्षामवानित्यत्र तु मत्वस्यासिद्धत्वेपि अकारान्तत्वाद्वत्वं भवत्येवेति दिक् ॥ १६ ॥

अथ मालिनीछन्दसाऽपरामाह —

**परिहरति परेषां यो हिताय स्वकीयम्,**
**तदुपकृतिमहिम्ना साधिकं साधयेत्सः ।**
**परिहृतनिजशक्तिः कर्त्तुरक्लेशहेतो—**
**स्तदपि भवति भूयो स्वोदनः कर्म कर्त्ता ॥ १७ ॥**

परेषां हितं कर्तुं स्वकीयं हितं यस्त्यजति स पुमान् तस्या उपकृते-र्महिम्ना साधिकमेव हितं साधयेत् । परिहृतेति । पचत्योदनं देवदत्त इत्यत्रौ-दने विलसति कर्मशक्तिः किन्त्वतिशयमृदुलतंडुलपरीपाके पाककृन्न प्रयाति प्रयासमिति पच्यते स्वयमोदन इत्योदन एवाहितकर्त्तृतां कर्मता-मपिधाय प्रयुञ्जते तत्र कर्त्तृक्लेशाभावाय निजशक्तिः ओदन शब्देन परित्यक्तेत्युत्प्रेक्ष्याभिहितम् । तत्रौदनशब्दस्तस्य प्रयासाभावसम्पादनरूप-परहितनिरतो भवन् पुनः कर्मकार्यालिङ्गितः कर्त्ता कर्मकर्त्ता जायते । परहिताय कर्मत्वत्यागे 'कर्मवत् कर्मणा' ( पा० ३।१।८७ ) इतिवचनाद् पुनः कर्म-कार्याधिगमसनाथं कर्त्तृत्वं लभत इत्याधिकमधिगतमुपकारमहिम्नेत्यर्थः ।

अयं भावः—सकर्मकाः केऽपि धातवः कर्मव्यापारमभिधाय तावत्य-पर्यवसानात् कर्तृव्यापारमपि तमुपसर्जनीकृत्याहुस्तत्र विक्लृत्युपसर्जन-विक्लेदनवचने पचौ यदा कर्मणि सौकर्यातिशयं प्रतिपादयितुं न विवक्ष्यते कर्त्तृव्यापारः प्रातिस्विकावान्तरव्यापारश्च समस्तकारकवर्गे निसर्गेणास्ति किंचित्कर एव कारकताया वक्तुं युक्तत्वात्तदा विक्लित्तौ स्वतन्त्रतया

विवक्षितेनौदनेनालिंगतायां कर्त्तृतायां सखीव सव्रीडं निवर्तते कर्मता। पचत्योदनमित्यत्र तु कर्त्तृव्यापारे पारवश्यात्त्यग्भूतं स्वातन्त्र्यमिति कर्मता न निवर्त्तते। तदुक्तम्—

**न वृतः प्रेषणं कर्म स्वक्रियावयवे स्थितम्।**

**निवर्त्तमाने कर्मत्वे स्वे कर्त्तृत्वेऽवतिष्ठते॥ इति॥**

एवं लूयते केदार इत्यत्र द्विधाभवनोपसर्जने लुनाति वृतः कर्त्तृव्यापाराविवक्षायां द्विधा भवनमात्रे कर्त्तृतां प्रतिपद्यते। तस्यां वावस्थायां कर्मातिदेशमासादयन् कर्मकार्याणि लभते यगात्मनेपदचिणादीनीति॥ १७॥

अथशार्दूलविक्रीडितेन तामाह—

**आत्मीयं गुणवृद्धिसादरतयाऽवज्ञाय यस्तानवं।**

**स्यादङ्गीकृतसाधु शब्दविषयस्फारोपकारव्रतः॥**

**इन्दोः कोऽपि समोऽपि पूर्वपरयोर्लब्धोदयः शुद्धयो —।**

**रेकादेश इवैक एव स कृती कुत्रापि नेत्रातिथिः॥ १८॥**

स प्रसिद्धः कोप्यचिन्त्यगुणगौरवः कृती महापुरुषः कुत्रापि देशे काले वा एक एव भाग्यवशान्नेत्रातिथिर्लोचनगोचरो भवति नतु बहव इत्यर्थः। स कः।

अबन्ध्यं दिवसं कर्त्तुं धर्मेणैकेन सर्वथा।

व्रतं गृह्णन्ति ये नित्यं ते नराः स्वर्गगामिनः

**ये वा विभागं कुर्वन्ति क्षुत्तृष्णाश्रमकर्षिताः।**

**देवानां च पितृणां च ते नराः स्वर्गगामिनः॥**

**जीवतः शिलवृत्यापि धर्मो यस्य न सीदति।**

**आढ्य एव स मन्तव्यो धर्मवित्ता हि साधवः॥**

इति महाभारतीयवचनानि संचिन्त्य य आत्मीयं तानवं धनादिकार्श्यमवज्ञाय विचारविषयतामनीत्वा गुणानां वृद्धिर्येषु ते गुणवृद्धयोऽधिकगुणवन्तस्तेषु सादरतयाङ्गीकृतं साधुशब्दानां पण्डितानामपि स्तुतेर्विषयः स्फारमुपकारव्रतं येन तादृशः स्यात्। पण्डितैरपि यदीयमुपकारव्रतं स्तुतिगोचरतामानीतं स इत्यर्थः। यदाह व्यासः—

**साधवो यं प्रशंसन्ति यं प्रशंसन्ति पण्डिताः।**

**राजानो यं प्रशंसन्ति स पार्थ पुरुषोत्तमः॥**

पुनः कीदृशः। इन्दोः समोपि शुद्धयोः क्व पूर्वपरयोर्लब्धोदयः विशुद्धमातृपक्षलब्धजन्मा। इन्दुस्तु शुद्धाशुद्धपक्षजात इत्यर्थः। इन्दुरपि कलाक्षयोपजायमानं तानवमात्मीयमविचार्य गुणानां कलानां या भाविनी वृद्धिस्तस्यां सादरतां भूयो भाविनी वृद्धिरलं कलासंङ्ग्रहेणेति विचार-चतुरतया कृत्वा साधव एव शब्दा येषां ते साधुशब्दा देवास्तद्विषयकलापान-रूपोपकारव्रतस्वीकारवान् भवतीति शब्दतः साम्यापत्तिः। एकादेश इवेति। एकादेशो ह्याद्गुणो वृद्धिरेचीत्यादि विषये सादरः सन् स्थानिभेदात् द्वयोरादेशयोः प्राप्तौ तानवमेकरूपतया प्राप्तमात्मीयमविचार्य साधुशब्देषु उपेन्द्रः, उपैधते इत्यादावुपकारको भवति। उक्तरीत्या शब्दतः इन्दुसमोपि भवन्नन्तरतमपरिभाषया शुद्धयोरन्तरतमयोः पूर्वपरयोर्वर्णयोर्लब्धोदयो भवति एकः पूर्वपरयोः (पा० ६।१ ७४) इति वचनादेक एव च भवतीति भवत्युपमानतास्य। तदेवं चन्द्रपक्षपुरुषपक्षे एकादेशपक्षे वार्थसंगतिः पद्ये ॥ १८ ॥

अथाऽनुष्टुभाह—

**महान्तो वर्द्धमाना हि वर्द्धयन्त्याश्रितानपि।**
**द्विरुच्यमानः संघातोऽवयवान् कुरुते तथा॥ १९॥**

महान्तः शिष्टाः प्रभुमान्यतयाऽहरहर्वर्द्धमानाः प्रकृष्टैश्वर्यवन्तः सन्तः स्वाश्रितान् अपि शब्दादनाश्रितानपि उपकारित्वेन वर्द्धयन्ति। हि निश्चितं अपरथा महत्त्वं व्याहन्येत्।

तत्र दृश्टान्तः वारद्वयंपठ्यमानः संघातो वर्णसमुदायोऽवयवानपि वर्णानपि तथा द्विरुक्तान् कुरुते इत्यर्थः। यथा ययाचे इत्यादिषु एकाचो द्वे प्रथमस्य (पा० ६।१।१) इति विधीयमानं द्विर्वमेकाच्[1]संघातेऽवयवे स्यादिति विचारेऽवयवद्विरुक्तौ समुदायो द्विरुक्तो न भवति। समुदाये तु द्विरुक्ते वृक्षः प्रचलन् सहावयवैः प्रचलति इतिन्यायादवयवा अपि द्विरुक्ता भवन्तीति उभयानुग्रहाथ पच् इति समुदाय यव द्विर्वाच्य इति भावः ॥१९॥

अथोपकारोपेक्षकस्य निन्दामाह—

**परकार्यनिमित्तं यो न कदाचन जायते।**
**सोऽविद्यमानवद् गेयः पूर्वामन्त्रितवत् पुमान्॥ २०॥**

देवदत्त, यज्ञदत्तेत्यत्र परस्मिन्नामन्त्रिते पदात् परत्वेनामन्त्रितस्येति प्राप्तमाष्टमिकानुदात्तत्वमामन्त्रितं पूर्वमविद्यमानवदित्यविद्यमानवद्

१. एकाचिसंघाते इति क०।

भावान्न भवति तत्रेदमुत्प्रेक्ष्योच्यते। वस्तुतः परकार्यनिमित्तत्वं कदापि पूर्वामन्त्रितेनास्त्यत एव तत्र पाणिनिनोक्तमविद्यमानवत्वम्। तथाच यः न कदापि परोपकारप्रवणस्तत्राविद्यमानत्वं जीवन् मृतत्वमेव वक्तव्यमित्यर्थः। उक्तञ्च—

उपकारविहीनस्य धिङ्मनुष्यस्य जीवितम्।
जीवन्तु पशवो येषां चर्माण्युपकरिष्यति ।। इति ।।

—०—

ज्योतिर्विद्वरनीलकण्ठविदुषः श्रीचन्द्रिकायास्तथा।
पुत्रेणाह्निगवीप्रसारितधिया गोविन्दनाम्ना कृते ।।
श्रीसभ्याभरणस्य सुज्ञसुखदेऽल्पे रश्मिमालाभिधे।
व्याख्याने शशिभृत्पुरीवसतिनोल्लासोऽगमत् सप्तमः ।।

इति
सप्तमोल्लासः समाप्तः

# अथ अष्टमः उल्लासः

वेतण्डास्यं विघ्नवल्लोलवि[1]त्रं भक्तानां श्रीसिद्धिमेधासवित्रम् ।

स्मृत्वा चित्ते शाब्दिकानां मुदेहं नीत्याशंसां सम्प्रति व्याकरोमि ॥ १ ॥

अथ नीतिप्रशंसां विवक्षुर्ग्रन्थकृद्रामचन्द्रोऽनुष्टभा नीतिप्रशंसामाह—

य एकतामिव गतः परं जानाति सेवितुम् ।

तस्यैव तदुदात्तश्रीरामन्त्रितसुबन्तवत् ॥ १ ॥

यो देवदत्तादिः पुमान् एकतां प्रभुतादात्म्यं गत इव सन् परं यं कंचन प्रभुं सेवितुं जानाति तस्यैव पुंसस्तस्य प्रभोरुदात्ता महती श्रीर्भवति । सम्यक् प्रभुसेवया समीचीनां प्रभुलक्ष्मीं स्वयं लभते इत्यर्थः ।

उक्तञ्च—

सुवर्णपुष्पितां पृथ्वीं विचिन्वन्ति त्रयो जनाः ।

शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ इति ॥

किंवत् । आमन्त्रितसुबन्तवत् । आमन्त्रितसम्वन्धि सुबन्तमामन्त्रितसुबन्तमिव पूर्वोक्तगुणविशिष्टं भवति । यथा मद्राणां राजन्नित्यत्र सुबामन्त्रिते पराङ्गवत्स्वरे ( पा० २।१।२ ) परस्यामन्त्रितस्य सुबन्तमङ्गवद् भवतीति तादात्म्यातिदेशादेकतामिव मृत्पिण्डवद्गतं सुबन्तं परस्यामन्त्रितस्य प्राप्तामुदात्तश्रियं स्वयमुपभुङ्क्ते इत्यर्थः । अत्र यद्वक्तव्यं तत्सत्प्रशंयामुक्तम् ।

अथान्यामाह—

गेहं प्राप्तस्य कर्त्तव्यः पुरस्कारो रिपोरपि ।

अवजानाति नो धातुः प्रत्ययं गुणरोधकम् ॥ २ ॥

गृहागतस्य स्वतः शरणागतस्य रिपोः शत्रोरपि पुरस्कारः ग्रामदानमानादिभिरादरातिशयः कर्तव्य इति राजनीतिः । अत्र दृष्टान्तः । धातुर्ब्रूञादिर्ब्रूते इत्यादौ ते इत्यादिकं प्रत्ययं सार्वधातुकमपित् ( पा० १।२।४) इति प्राप्तं ङित्वं क्ङितीतिवचनात् गुणरोधकमपि नावजानाति, न यत्रकुत्रापि अवस्थापयति किन्तु प्रत्ययः ( पा० ३।१।१ ) परश्च ( पा०३।१।२ ) इति वचनात् पुरस्करोत्येवेत्यर्थः ॥ २ ॥

---

१. लूञ् छेदने इत्रः ।

अथापरामाह—

विनापि खलु सम्बन्धं यः कश्चित् गृहमागतः ।
अभ्यन्तरङ्गमधिकः करोतेरिव सुट् सताम् ॥ ३ ॥

सतां गृहस्थाश्रमधर्मंजनतां खलु निश्चितं बन्धुजामात्रादिसम्बन्धं विनापि यः कश्चिदुदासीनोपि स्वगृहमागतः सन्नंतरङ्गात् पुत्रमित्रादेरप्यधिकः सत्कारेण भवति । तत्र दृष्टान्तः सुट्करोतेरिव । यथा संस्कर्त्ता । समस्करोत् संचस्कारेत्यादिषु संपर्युपेभ्यः करोतौ भूषणे ( पा० ६।१।१३७ ) अडभ्यासव्यायेपि ( वा० ६।१।१४० ) इति विहितः सुट् यद्यप्यभक्तत्वान्न तत्सम्बन्धी तथापि सुट्कात्पूर्वं (पा० ६।१।१३५) इति वचनादडभ्यासयोरन्तरङ्गयोरपि परो भवंस्ततोऽधिको भवति ।

ननु टित्वेन लिङ्गेन भक्त एवायम् । भक्तस्तु—

नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना ।
श्रियं वात्यन्तिकां ब्रह्मन् येषां गतिरहं परा ॥ इति ॥

भगवद्वचनैर्भगवतो विष्णोरप्यन्तरङ्गादधिको भवति । तत्कथं करोतेः सुट् भक्तो न स्यात् । उच्यते—कात्पूर्वग्रहणं सुटोऽभक्तत्वज्ञापनार्थम् । तथाहि संस्कार्षीष्ट संक्रियत इति संयोगादिलक्षणाविड्गुणौ न भवतः । यद्येवं संस्क्रियत इति तिङङतिङः (पा० ८।१।२८) इति निघातोऽपि न प्राप्नोति सुटा व्यवहितत्वात् । सत्यम् । स्वरविधौ व्यंजनमविद्यमानवद् (परि ८१ ) इति वचनान्नास्ति व्यवधानः । यद्येवं सुट्कात्पूर्वः ( पा० ६।१।१३५ ) इति सूत्रं वक्तव्यं टित्करणं किमर्थम् उच्यते—परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् ( पा० ८।३।७० ) इति विशेषणार्थम् । तेन परिष्करोति पर्यष्करोदिति षत्वं यथा स्यादिति ॥ ३ ॥

अथेमामेव नीत्युक्ति शब्दान्तरेणाह—

विनापि खलु सम्बन्धं स्थानमानादिसत्कृतिम् ।
सुधीरधीयीत कृञः कात्पूर्वं कुर्वतः सुटम् ॥ ४ ॥

उक्तार्थोऽपि श्लोको विविच्यते—

सुधीर्मेधावान् कृञो धातोः सकाशात् खलु निश्चितं सुहृत्सम्बन्धं विनापि स्थानं गृहं मानोऽभ्युत्थानादिकं आदिशब्देन प्रतिष्ठां एवंविधां सत्कृति मान्यतामधीयीत पठेत् । आख्योतोपयोगे ( पा० १।४।२९ ) इति सूत्रेण कृञ इति पञ्चमी । कीदृशात् कृञः सुटं कात्पूर्वं कुर्वतः सुट्कात्पूर्वं ( पा० ६।१।१३५ ) इति वचनात् । व्याख्यातोऽभिप्रायः प्राक् पद्ये ॥ ४ ॥

अथेतरामाह—

**सगुणं निर्गुणं वापि यं कंचित् गृहमागतम् ।**
**पुरस्कुर्वीत मतिमान् प्रकृतिः प्रत्ययं यथा ॥ ५ ॥**

मतिमान् यं कंचनातिथिं सगुणं पण्डितं निर्गुणं स्वजातिविद्यारहितं स्वगृहमागतं चेत् स्थानमानासनादिभिः पुरस्कुर्वीत । अतिथिसत्कारे विशेष आपस्तम्बेनोक्तस्तथा हि—

ब्राह्मणायानधीयानायासनमुदकं देयं न प्रत्युष्ठेदभिवादनायैवोतिष्ठेदभिवाद्यश्चेद्राजन्यवैश्यौ च शूद्रमभ्यागतकर्मणि विनियुज्यादथास्यै दद्यादिति । तत्र दृष्टान्तः । यथा प्रकृतिः प्रत्ययं पुरस्करोति । रामेति प्रकृतिः सुः ( प्रत्ययः ) राम इति । भू इति प्रकृतिः तिप् शपौ, भवत[1] इति ॥ ५ ॥

अथापरामाह—

**दैन्यमन्यस्य हरति प्राप्तोऽपि व्यसनं महान् ।**
**निलीनोऽपि किलोदात्त उदात्तं कुरुते परम् ॥ ६ ॥**

उदात्त उदारगुणयुक्तो महान् वंशप्रतिष्ठासम्बन्धिमहत्त्ववान् साम्प्रतं व्यसनं दारिद्र्यं प्राप्तोपि अतएव निलीनोपि तूष्णीमेकान्ते स्थितोऽपि सन् परमतिथिं गृहमागतमुदात्तं स्वतः परतो वा महत्त्ववन्तं कुरुते । यथा राजा रघुः विश्वजिद्यागे कृतसर्वस्वदक्षिणोमृद्भाण्डशेषविभूतिः सन् गृहागतायातिथये वरतन्तुमुनिशिष्याय कौत्साय सोत्साहं अग्न्यगारे दिनत्रयमधिवासस्य कुबेरात् सकाशात् स्वपुरुषार्थेन चतुर्दशकोटीः सुवर्णमुद्राः प्रददाविति पुराणम् । अत्र व्याकरणदृष्टान्तः । यथा कुमारीति शब्दः कुमारशब्दात् फिषः ( फि० सू० १ ) इति प्रातिपदिकस्वरेणान्तोदात्तत्ववत् उत्पन्ने वयसि प्रथमे ( पा० ४।१।२० ) इति ङीपि पित्वादनुदात्तौ सुप्पितौ ( पा० ३।१।४ ) इत्यनुदात्ते परे यस्येति चेति ( पा० ६।४।१४८ ) कुमारशब्दाकारलोपः । अत्रानुदात्तस्य च यत्रोदात्तलोपः । यस्मिन्ननुदात्ते परत उदात्तो लुप्यते तस्यानुदात्तस्य स्थानेऽनुदात्त आदेशो भवतीति ङीबुदात्तो विधीयते. तदाश्रयेणायं सूक्तिः । तत्र यद्यप्युदात्तो लुप्यते तथापि वर्णानां नित्यताश्रयेण निलीनत्वाभिधानं युक्तम् ॥ ६ ॥

अथेमामेव भङ्ग्यन्तरेणाह –

**प्रतिपक्षमनुन्मूल्य प्रतिष्ठा खलु दुर्लभा ।**
**अनिवर्त्य किलोदात्तमुदात्तो ङीब् न जायते ॥ ७ ॥**

---

१. भवतीति क० ।

देवदत्तस्य प्रतिष्ठा प्रतिपक्षं शत्रुमनुन्मूल्य 'समूलनाशं विना दुर्लभा दुःप्राप्यास्ति । अत्र दृटान्तः । यथाङीबनुदात्तोप्युदात्तं स्वरमनिवर्त्य दूरीकरणं विना खलु निश्चितं स्वयमुदात्तो न जायते । यथा कुमारीत्यादावुदात्तमकारं निवर्त्य ङीबुदात्तनिवृत्तिस्वरेणोदात्तो भवति न तु तस्मिन्नित्यर्थः ॥ ७ ॥

अथान्यामाह—

**वरुणस्येव सा वृद्धिर्वत कस्योपयुज्यते ।**

**न वर्द्धयति वा कंचिदग्नीकारमिवाश्रितम् ॥ ८ ॥**

या धनजनमानादिना पुंसो वृद्धिः कंचिदप्याश्रितं न वर्द्धयति स्वतुल्यं न करोति सा वृद्धिः कस्योपयुज्यते, अपि तु न कस्यापीत्यर्थः । तत्र दृष्टान्तः । वरुणस्येति । यथा अग्निश्च वरुणश्चाग्नीवरुणौ देवता यस्य हविषस्तदाग्निवारुणमिति भवत्यत्र तद्धितेऽणि देवता द्वन्द्वे च (पा० ६।२।१४१) इत्युभयपदवृद्धौ सत्यामीदग्ने सोमवरुणयोः ( पा० ६।३।२७ ) इति प्राप्तमीत्वं बाधित्वा इद्वृद्धौ (पा० ६।३।२८) वृद्धिमत्युत्तरपदे अग्नेरिकारः स्यादिति ह्रस्वेकारः क्रियते, एवं सति वरुणशब्दस्य वृद्धिः आश्रितमग्निशब्दस्येकारं न वर्द्धयति । स्वातिरिक्तस्य न कस्याप्युपयुज्यत इत्यर्थः । यद्यप्यग्निवरुणौ देवतेति विग्रहवाक्य एव प्राग्वृद्धेरीत्वमीदग्नेरिति प्रसज्यते तथाप्यपवादविषयपरिहारेणोत्सर्गाप्रवृत्तेः प्रक्रियावाक्ये न क्रियते लौकिके प्रयोगार्हे तु वाक्ये भवत्येव दीर्घमीत्वमग्नीवरुणाविति ॥ ८ ॥

अथापरामाह—

**स्फुरद्वृद्धिश्रियाहीनोप्याश्रयाय स युज्यते ।**

**संविधौ गौरवं यस्य सोमस्याग्नेरिवोचितम् ॥ ९ ॥**

स्फुरन्त्या वृद्धिश्रिया हीनोपि साति[1]शयप्रभुत्वरहितोपि मध्यस्थः प्रभुत्ववानेव स पुमानाश्रयायाश्रयं कर्त्तुं युज्यते । स कः यस्य पुंसः सन्निधौ स्थितिमता पुंसा उचितं योग्यं गौरवं महत्त्वं भवति । यस्य तु सन्निधाने न गौरवं स महतापि प्रभुत्वेनाश्रितो नाश्रयणीयः । तत्र दृष्टान्त । सोमस्य सन्निधावग्नेरिव गौरवं यथा सोमशब्दस्य वृद्धिहीनस्यापि सन्निधावग्निशब्दस्य गौरवमीदग्नेः सोमवरुणयोः (पा० ६।३।२७) इति दीर्घेकारविधनात् । स इवाश्रययोग्यो भवति, नतु वृद्धियुक्तो वरुणशब्दः । यथा अग्निवारुणीमनड्वाहीमालभेतेत्यादौ तत्सन्निधाविति ह्रस्वेकारविधानेन दीर्घत्वेन प्राप्तस्य गौरवस्य निवारणात ॥ ९ ॥

---

१. साति यश्चयप्रभु० इति कः ।

अथान्यामाह—

**न प्रीता येन सुहृदो न द्विजा नच वान्धवाः ।**
**संज्ञामात्रफलं पुंसस्तद्राजत्वमजादिवत् ।। १० ।।**

तादृशस्य पुंसस्तत् राजत्वं राजेति लोकमुखोद्गतो व्यवहारयोग्यः शब्दो नामाखिलस्य व्यवहारहेतुरिति वशिष्ठवचनात् संज्ञामात्रं फलं परस्य तत् डित्थडवित्थादिवद् दृढशब्द एव संपन्नो न तु दानभोगादीति प्रतिपादनात् । प्रकृतिरञ्जनाद्यर्थं प्रतिपादनाद्वा तस्य यौगिकत्वमिति । येन पुंसा सुहृदो मित्राणि च द्विजा ब्राह्मणाश्च नच बान्धवा अपि नच प्रीता दानमानादिना न सन्तुष्टा जाताः । यतोऽयं विना श्रद्धादानमर्थिनश्च न लभ्यन्ते । उक्तं च महाभारते—

**न विनाऽकृतपुण्यानां नराणां महतामपि ।**
**त्रीण्येतान्युपपद्यन्ते श्रद्धा-दातव्य-मर्थिनः ।। इति ।।**

अत्र दृष्टान्तः । अजादिवत् । जनपदशब्दात् क्षत्रियादञ् । (पा० ४।१।१६८) द्व्यञ्मगधकलिङ्गसूरमसादण्, (पा० ४।१।१७१) वृद्धेत्कोसलाजादाञ्यङ् । (पा० ।४।१।१७१) इत्यादीनां बहूनां प्रत्ययानां ते तद्राजा (पा० ४।१।१७४) इति सूत्रेण विधीयमानाऽवयवार्थशून्या तद्राजसंज्ञारूढशब्दवदस्ति । एवं सत्यङ्गस्यापत्यमाङ्गः । बह्वन्यपत्यान्यङ्ग इत्यादौ तद्राजस्य बहुषु तेनैवास्त्रियाम् (पा २।४।६२) इत्यणो लुग्विधानाद्यथा तद्राजसंज्ञायाः फलं लोप एव नान्यत्तथा तत्र पुरुषे राजसंज्ञायां रंजनाद्यर्थनाश एव फलम् । अत्र जीर्णटीकायां बहूक्तं तत एवावधार्य्यम् ।। १० ।।

अथान्यामाह—

**प्रवृद्धस्यान्तिके स्थेयं पूर्वरीत्या न धीमता ।**
**कर्त्तापि ण्यन्तबुद्धयादेः कार्मीभूयैव तिष्ठति ।। ११ ।।**

धीमता चतुरेण पुंसा धनजनप्रभुत्वादिना दैववशात् प्रवृद्धस्य प्रकृष्टां वृद्धिमैश्वर्यं प्राप्तस्य मित्रादेरन्तिके समीपे पूर्वरीत्या दारिद्र्यावस्थावन्न स्थेयम् । अथवा पुरुषार्थेन वर्द्धितो राजा तदन्तिके मन्त्रिणोपि पूर्वरीत्याऽवस्थेयमिति राजनीतिः । राजा मित्रं केन दृष्टं श्रुतं वेत्युक्तेः । तत्र दृष्टान्तः । कर्त्तापीति । अण्यन्तस्य बुद्धयादेः कर्त्तापि ण्यन्तावस्थायां प्रवृद्धिं गतस्य बुद्धयादेरन्तिके कर्म्मीभूयैव तिष्ठति । केवलस्य यस्य बुद्धयादेः सन्निधौ सकलकारकप्रयोक्ता कर्त्तृतयाभूदिदानीमुपचितस्य तस्य सन्निधौ प्रयोज्यतामेव । नतु प्रयोजकतामित्यर्थः । यथा बुद्धयते माणवको धर्मम् । बोधयति

माणवकं धर्मं देवदत्त इत्यादौ गतिबुद्धिप्रत्यवसानार्थशब्दकर्म्माकर्मकाणमणिकर्त्ता स णौ (पा० १४५२) इति कर्त्तुः कर्मसञ्ज्ञा भवति। एवं सर्वस्य सूत्रस्य।

शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत्।
आशयच्चामृतं देवान् वेदमध्यापयद्विधिम्॥

आसयत् सलिले पृथ्वीं यः स मे श्री हरिर्गतिः। इत्युदाहरणान्येवमर्थकानि ध्येयानि। एत[1] दृष्टान्तवलेन पूर्वपरिचितस्यापि इदानीमुपचितस्य सन्निधौ स्वातन्त्र्यम् नाविःकुर्यात् इति दर्शयितुमिव कर्त्ताकर्मत्वमङ्गीकृतमित्युत्प्रेक्ष्योक्तम्॥ ११॥

अथार्यया तामेव भङ्ग्यन्तरेणाह—

गणयन्ति नोपकारं प्रवर्द्धमाना न सम्बन्धम्।
कर्त्तापि कार्यते चेदण्यन्तैर्बुद्ध्याादिभिः कर्म्म॥ १२॥

इदानीं भाग्यवशाद्वर्द्धमानाः प्रभवः पूर्वावस्थायां केनापि कृतमुकारं न गणयन्ति न मन्यन्ते। सुहृदादिसम्बन्धं च न गणयन्ति। तत्र दृष्टान्तः। प्रयोजकव्यापाराभिहितणिच् प्रत्ययान्तैर्बुद्ध्यादिभिर्धातुभिरण्यन्तावस्थायां यः कर्त्ता सोपि कर्म कार्यते। कर्मसंज्ञः कार्यंत इत्यर्थः। प्राक्पद्योक्त एवाशयः। कर्मकार्यत इति कर्मकरः क्रियत इति वार्थमाश्रित्य कवेः सूक्तिः।

प्रवर्द्धमाना धीमन्तः कं नयन्ति न नीचताम्।
नयन्ति ण्यन्तबुध्यर्था स्वतन्त्रं परतन्त्रताम्॥ १३॥

धीमन्तो राजादयः दिने दिने प्रवर्द्धमाना राज्यप्राप्त्यादिना वर्द्धिष्यमाणा कं पुमांसं मित्रादिकं नीचतां कर्मकरत्वं न नयन्ति न प्रापयन्ति। नयतिर्द्विकर्मा। अपि तु सर्वमपि भ्रातृसुहृदादिकं नीचतां नयन्ति। तत्र दृष्टान्तः। हेतुमतिच (पा० ३।१।२६) इति सूत्रेण विहितणिजन्ताः बुद्ध्यर्था धातवोऽण्यन्तावस्थायां स्वतन्त्रं स्व आत्मा तन्त्रं प्रधानं यस्य स स्वतन्त्रः। तं प्रधानभूतं कर्त्तृत्वं प्राप्तमपि कर्मत्वापादनेन परतन्त्रतां पराधीनत्वं नयन्ति। तच्च कर्त्तृत्वं चेतनाचेतनसाधारणम्। प्राधान्येन यदा यो व्यापारो धातुनोपादीयते स कर्त्ता तदेव च स्वातन्त्र्यं नाम। अन्येषान्तु कारकाणां न्यग्भावोपपादनात् तदधीनप्रवृत्तित्वाच्च।

---

१. क० पुस्तके नास्ति।

एवञ्च देवदत्तो गच्छतीति, चेतनः कर्त्ता। रथो गच्छतीत्यादावचेतनः कर्त्ता संभवति प्राक्पद्योक्तमेवोदाहरणादि ध्येयम् ॥ बुद्ध्यर्थानां धातूनामधीमत्वं वाच्यत्वेन ज्ञेयम् ॥ १३ ॥

अथापरामाह—

**पुरस्काराय योग्यश्चेत्तिरस्कारं क्वचिद् गतः।**

**तथापि तद्धितो भूत्वा बहुज्वदुचितं वदेत् ॥ १४ ॥**

यदि कश्चित्पुमान् पंडितः पुरस्कारस्तद्धितो हितकारीव लोके भूत्वोचितं योग्यं प्रभुमनोरञ्जकवचनं तद्गुणवर्णनादि वदेत्, न तु तदीयान्दोषान् कीर्त्तयेत्, नापि तिरस्कारं कीर्त्तयेत्।

वंचनं चापमानञ्च मतिमान्न प्रकाशयेदिति न्यायात्। तथा कृते सति तच्छ्रवणे स प्रभुरपि लज्जितो भवति पुरस्कारे च सादरां धियं दधाति। लोकोपि तुष्यति मानापमानसाम्येन परमेश्वरोऽपि तुष्यतीति भावः। अत्र दृष्टान्तः। बहुज्वदिति। यथा बहुच्प्रत्ययः 'प्रत्ययः' ( पा० ३।१।१ ) 'परश्च' ( पा० ३।१।२ ) इति वचनात् पुरस्काराय प्रकृतेः परः कर्त्तुं योग्योपि विभाषा सुपो बहुच् पुरस्तात्तु ( पा० ५।३।६८ ) इति वचनान्न पुरस्कृतः, किन्तु प्रकृतेः पूर्वं कृतो यद्यपि तथापि तद्धितस्तद्धितसंज्ञो भूत्वा बहुपटुरित्यादावीषदसमाप्तिरूपमुचितमर्थं वदत्येवेत्यर्थः। यदत्र वक्तव्यं तदुपकारप्रशंसायामुक्तम् ॥ १४ ॥

अथार्यंयान्यामाह—

**एकेनावमतोपि स्वोचितमन्यत्र याति सत्कारम्।**

**संख्यावान् कृत्वसुचाऽवज्ञातोऽध्यर्द्धशब्द इव ॥ १५ ॥**

संख्यावान् पण्डित एकेन केनाप्यविवेकवता चेदवमतो येनासत्कृतस्तर्हि न खेदवशमात्मनं नयेद्यावदान्यत्र केपि विवेकिनः सन्ति। तेभ्यस्तु स्वोचितं स्वयोग्यं सत्कारं पूजां याति प्राप्नोत्येव। अत्र दृष्टान्तः। बहुगणवतुसंख्ये ( पा० १।१।५३ ) इत्यत्र सूत्रे वार्तिककृता अध्यर्द्धग्रहणं च समासकन्विध्यर्थमित्युक्तम्।

अस्यार्थः। अध्यर्द्धशब्दः संख्या संज्ञो भवति समासाश्रयविध्यर्थं कन्विध्यर्थं चेति। संख्यावान् संख्यावानध्यर्द्ध शब्दस्तस्माद् द्वितीयमानेन कृत्वसुचाऽवज्ञातोनुत्पत्त्या तिरस्कृतोपि यद्यपि तथापि संख्या संज्ञावत्वात् समासकन्विधिर्भवत्येव। अध्यर्द्धशूर्पमध्यर्द्धकं च भवति। तथाहि—अध्यर्ध्येन शूर्पेण क्रीतमन्नमिति विग्रहे तद्धितार्थोत्तरपदसमाहारेचेति

( पा० २।१।५१ ) तद्धितार्थविषयत्वात् समासे अध्यर्द्धशब्दस्य संख्या-संज्ञकत्वात् संख्यापूर्वो द्विगुः ( पा० २।१।५२ ) इति द्विगुसंज्ञायां तेन क्रीतम् ( पा० ५।१।३७ ) इत्यर्थे अध्यर्द्धपूर्वात् द्विगो र्लुगसंज्ञायाम् ( पा० ५।१।२८) इति लुग्भवति। अध्यर्द्धकमित्यत्र क्रीतार्थे संख्याया अतिशतांदन्तायाः कन् इति ( पा० ५।१।२२ ) कन्, तत्र वार्त्तिककृन्मते सूत्रेऽध्यर्द्धग्रहणं न कर्त्तव्यम्। अध्यर्द्धग्रहणं च समासकन्विध्यर्थम्। लुकि चाग्रहणमिति तदुक्तेः ॥ १५ ॥

अथार्य्यान्यामाह—

**गुणवचनो वल्लभतां लभते प्रायेण सर्वस्य।**
**ऋषिरुद्दिदेशपूर्वं गुणवचनाद् ब्राह्मणादेः ष्यञ्॥ १६ ॥**

गुणं वक्तीति गुणवचनः। नन्द्यादित्वाल्ल्युः। प्रभोर्यो गुणमेव वक्ति स प्रायेण सर्वस्य लोकस्य राजादेर्वल्लभतां प्रियतां लभते। तस्मात् सर्व-स्यापि गुणानेव वदेत् न कस्यापि दोषं कीर्त्तयेदिति भावः।

यथोक्तम्—

**"यदीच्छसि वशीकर्त्तुं जगदेकेन कर्मणा।**
**परापवादसस्येभ्यो चरन्तीं गां निवर्त्तय॥"**

गां वाचं पशुञ्च चरन्तीं मुखान्निःसरन्तीं तृणं भक्षयन्तीं च। तत्र दृष्टान्तः। यथा ऋषिः पाणिनिः गुणवचनब्राह्मणादिभ्यः कर्मणि च् (पा० ५।१।१३४, इति सूत्रे पूर्वमादौ सूत्रारम्भे। गुणवाचिन उद्दिदेशावोचत् पश्चाद् ब्राह्मणादि-गणमाह। सूत्रार्थस्तु गुणमुक्तवन्तो गुणवचनाः गुणवचनेभ्य शब्दभ्यो ब्राह्मणादिभ्यश्च षष्ठी समर्थेभ्यः कर्मण्यभिधेये ष्यञ् प्रत्ययो भवति चकाराद्भावे च। कर्मशब्दः क्रियावचनः-जडस्य भावः कर्म वा जाड्यम्। ब्राह्मणस्य भावः कर्म वा ब्राह्मण्यम्। ब्राह्मणादिराकृतिगणः। आपादपरि-समाप्तेरेषोऽधिकारः॥ १६ ॥

अथापरामाह—

**प्रयतेत गुणानेव प्राज्ञोवर्द्धयितुं यतः।**
**सम्पदिक्परिभाषेव गुणवृद्धिविधीन् प्रति॥ १७ ॥**

प्राज्ञो गुणान् श्रुताऽध्ययनशीलादीनेव वर्द्धयितुं यतेत यत्नं कुर्यात्। कुतः। यतः कारणात् सम्पल्लक्ष्मीर्गुणान् प्रति स्वयमुपैतीत्युचितक्रिया-पदाक्षेपः। यथोक्तम्—

**गुणेषु यत्नः क्रियतां किमायासैः प्रयोजनम् ।**
**विक्रीतन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥**
आत्मा तु पात्रतां नेयः पात्रमायान्ति सम्पदः इति ।

अत्र दृष्टान्तः । इक्परिभाषेवेति । यथा । इको गुणवृद्धी इतीक्परिभाषा विध्यङ्गभूतत्वान् मिदेर्गुणः ( पा० ८।६।८२ ) मृजेर्वृद्धिः ( पा० ४।१।११४ ) इत्यादिगुणवृद्धिविधीन् प्रतीक्पदोपस्थानं स्वव्यापारमभिसन्धाय गच्छति तमेत्यर्थः । अत्र यदक्तव्यं तदुपकारप्रशंसायामुक्तम् ॥१७॥

अथेतरामाह—

**तमविष्ठनाविव परं न विनातिशयं प्रतिष्ठा स्यात् ।**
**तदजादी इव भूयो गुणवचनादेव सा भवति ॥१८॥**

यस्य कस्यापि पुंसः परमुत्कृष्टमतिशयं विद्यादिगुणाधिक्यं विना लोके प्रतिष्ठा न स्यादतः प्रकर्षार्थं धीमता यत्नो विधेयः । अत्र दृष्टान्तः । यथाऽतिशायने तमविष्ठनौ ( पा० ५।६।५५ ) इति सूत्रेण विधीयमानौ तमबिष्ठनाविव प्रत्ययौ प्रकृतिगतप्रकर्षं विना न भवतः । अयमेषामतिशयेन लघुर्लघुतमो लघिष्ठो वा । भूयः पुनः सा प्रतिष्ठा सत्यपि प्रकर्षे गुणवचनादेव माधुर्यादि गुणयुक्तादेव वचनाज्जायते । नतु कटुकवचनात्तस्य तद्विरोधित्वादित्यर्थः । तत्र दृष्टान्तः । तदजादी इवेति । तौ च तावजादी च तदजादी इष्ठन्नीयसुनौ प्रत्ययौ यथा गुणवचनादेव भवतः । अजादीगुणवचनादेवेति वचनात् सत्यपि प्रकर्षेणान्यतो भवतः । यथा अतिशयेन पटुः पटिष्ठः । अयमनयोरतिशयेन पटुः पटीयान् । अत्र द्विवचनविभज्योपपदे तरबीयसुनौ ( पा० ५।३।५७ ) इतीयसुन्प्रत्ययः ॥१८॥

अथान्यामाह—

**सत्यामप्यर्थसम्पत्तौ पराधीनस्य किं सुखम् ।**
**इष्टमिष्टेऽधिगन्तुं चेन् न राजपदमर्थवत् ॥१९॥**

पराधीनस्य परसेवकस्य पुंसोऽर्थसम्पतौ सुवर्णाश्वादिसामग्र्यां स्वीयायां सत्यामपि किं सुखं न किमपीत्यर्थः ।

"न स्यादन्योप्यहमिव जनो यः पराधीनवृत्ति ( मेघ० पू० ) इति कालिदासोक्तेः । अत्र दृष्टान्तः । इष्टमिति । यथा यद्यपि राजपुरुष इत्यादि वाक्येषु राजपदं पुरुषविशेषणीभूतेनार्थेनार्थवत्तयापि पुरुषपदं पराधीनतयाऽनुयायितद्विशेषणसम्बन्धमिष्टमपि नाधिगन्तुं शक्नोति । परार्थाभिधानं वृत्तिः ( म० पा० २।१।१ ) इति मत्वेत्यर्थः ॥१९॥

पुनरप्यन्यामाह—

**सामर्थ्यमाश्रितः को वा न समर्थो भवेदिह ।**
**समर्थो विधिरप्युक्तः समर्थपदसंश्रयात् ।।२०।।**

को वा देवदत्तादिः पुमानिह नीतिविषये समर्थं बहुतराश्च सुवर्णादिसंयुत पुमांसमाश्रितः सन् समर्थो धनवान् प्रबलो वा न भवेदपितु सर्वोपि समर्थमाश्रितः पुरुषार्थवान् भवतीत्यर्थः । तत्र दृष्टान्तः । विधिः समर्थः पदविधिः । विधीयत इति कर्म साधनो विधिशब्दः । पदानां विधिः पदविधिः । समासादिः समर्थः शक्तो विग्रहवाक्यार्थाभिधाने यः शक्तः स समर्थो वेदितव्यः । यतोऽसौ समर्थ पदाश्रयः समर्थानां सम्बद्धार्थानां संसृष्टार्थानां पदनामाश्रयभूतः । तत्र सामर्थ्यं द्विविधं व्यपेक्षासामर्थ्यमेकार्थीभावश्च । तत्र वाक्ये आकांक्षायोग्यतासन्निधिमतां पदानामन्योन्यसम्बन्धरूपा व्यपेक्षा । तथाहि—राज्ञः पुरुष इति वाक्ये राज्ञः इति पदादनियतं सम्बन्ध्यपेक्षयोद्भूतसम्बन्धविशेषणभावमापन्नो राजार्थः प्रतीयते पुरुषार्थश्च प्राधान्यमापन्नः प्रतीयते । राजा च योग्यं सन्निहितं पुरुषमपेक्षते । मदीयोऽयमितिपुरुषश्च विशेषणत्वेन राजानमपेक्षतेऽस्याहमिति । वृत्तौ त्वेकार्थीभावः । सामर्थ्यं राजशब्दोपि पुरुषार्थमाचष्ट इति द्वयोरेकार्थीभावो भवति क्षीरोदकवत् । यथा क्षीरोदके संपृक्ते न ज्ञायेते कियत्क्षीरं कियदुदकमिति तादात्म्यापन्नत्वात् ।।२०।।

अथापरामाह –

**केनाप्युपायेन सदा कुर्यात् संगतिमुत्तमैः ।**
**लीलयैवोच्चतां धत्ते रिदन्ते यदुपोत्तमम् ।।२१।।**

पुमान् केनाप्युपायेनोत्तमैः पुरुषैः सह सदा संगतिः कुर्यात् । यतः सा सत्संगतिर्लीलयैवानायासेन वोच्चतां महत्त्वं धत्ते करोति । तत्र दृष्टान्तः । रिदन्त इति । यद्यस्मात् कारणात् उपोत्तमंरिति ( पा० ६।१।२१७ ) । त्रिप्रभृतीनामन्त्यमुत्तमं तस्य समीपमुपोत्तमं रिदन्तस्य प्रत्ययस्योपोत्तमं यत्तदुदात्तं भवतीति करणीयम् । अत्र तव्यत्तव्यानीयरः ( पा० ६।७।९६ ) इत्यनीयर रिदन्ते करणीयमित्यादि शब्दे ईकारः । उदात्तः उत्तमः समीपवर्त्तित्वाद् ।।२१।।

अथापरामाह—

**सुज्ञः परानुरोधेन द्वन्द्वावत्शिक्षेत वर्द्धितुम् ।**
**यो धत्ते परवल्लिंगं प्रधानमपि सर्वथा ।।२२।।**

सुज्ञो देवदत्तादिः द्वन्द्वात् द्वन्द्वसमासात् सकाशात् परः उत्कृष्ट उपजीव्यस्तच्चित्तानुरोधेन वर्त्तितुं स्थातुं यत्नेन यत्नवान् भवेत्। पराभिप्रायानुरूपमेव वर्त्तितव्यम्। न तु यस्य कस्यापि चित्तं कुत्रापि विषये सोद्वेगं न विधेयम्। अतो भोजनाच्छादनादिकार्ये धनार्जनादौ व्यवहारे वा काठिन्यमपहाय परच्छन्दानुवर्त्तनेन परमेश्वरः सन्तुष्टो भवतीति भावः। उक्तञ्च -

**येन केनाप्युपायेन यस्य कस्यापि देहिनः।**

**संतोषं जनयेत् प्राज्ञस्तदेवेश्वरपूजनम्** इति॥

अत्र दृष्टान्तमाह यो धत्त इति। यो द्वन्द्वसमासः सर्वथा सकलद्वन्द्वपदार्थप्राधान्यभागपि परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः (पा० २।४।२६) इतिवचनात् मयूरीकुक्कुटौ कुक्कुटमयूर्याविव्यादौ परस्योत्तरपदस्य यल्लिङ्गं धत्ते इत्यर्थः। एवं यः पुमान् परवान् पराधीनः तस्य लिङ्गं चिह्नं परवल्लिङ्गं सर्वथा प्रधानमपि सन् पराधीनतामेवावलम्बते। स द्वन्द्वसमासस्य शिष्योऽस्त्वित्यर्थः॥२२॥

अथान्यामाह—

**अन्यत्र विपुलप्रीतेरन्तरङ्गैकसत्कृतेः।**

**प्रीतिरीतिं बहुव्रीहेर्न शिक्षेत विचक्षणः॥२३॥**

विचक्षणः पण्डितो बहुव्रीहेर्बहुद्रव्यवतः पुंसः सम्बन्धिनी प्रीतिरीतिं प्रीतिप्रकारं न शिक्षेत् नाधीयीत। कीदृशस्य अन्यत्र स्वस्माद् भिन्ने साधोर्भिन्ने वा बहुद्रव्यवति विपुला भूयसी प्रीतिर्यस्य। समानशीलव्यसनेषु सख्यमित्युक्तेः। तया अन्तरङ्गेषु पुत्रसुहृदादिष्वेका केवला सत्कृतिः सत्कारो मान्यता यस्मात् यो धनवत्सु प्रीतिभाक् पुत्रादिषु सत्कारवान्नतिथिषु न साधुषु वा तेन सह प्रीतिं न कुर्यात् सत्कारप्रीत्योरभावात्। व्याकरणपक्षे— कीदृशस्य। अन्यत्रान्यपदार्थे विपुलाप्रीतिराशक्तिर्वाच्यत्वं यस्य अनेकमन्यपदार्थे (पा० २।२।२४) इति पाणिनिवचनात् तथान्तरङ्गेषु बहुव्रीहिसमासवर्त्तिपदेष्वेका केवला सत्कृतिर्व्याकरणोक्तसंस्कारो यस्मिन्। बहुव्रीहौ प्रकृत्या पूर्वपदम् (पा० ६।२।१) इति पूर्वपदप्रकृतिस्वरादिकं वर्त्तिपदानामेव बहुव्रीहिं करोति॥२३॥

अथेमामेव भङ्ग्यन्तरेणाह—

**बहुव्रीहिरिवान्यत्र प्रीतिमानपि नीतिमान्।**

**स्वकीयान्नावजानीयात् कार्यकालापलायिनः॥ २४॥**

अन्यत्र स्वकीयेभ्यो भिन्ने साध्वादिभ्यो वाभिन्ने प्रीतिमानपि पुमान् कार्यकाले सुखे दुःखे वा न पलायन्ते कार्यकालसावधानान् स्वकीयान्

भ्रात्रादीन्नावजानीयात् किन्तु कार्यकालापलायिनो योद्धारो यथा पूज्यन्ते एवमेतादृग्गुणविशिष्टाः भ्रात्रादयोऽपि दानमानादिभिः सत्कार्या एव। क इव। बहुव्रीहिरिव पूर्वोक्तगुणविशिष्टोऽस्ति। कीदृशो बहुव्रीहिः अन्यत्रान्यपदार्थे प्रीतिमानपि तत्प्राधान्यात्। एवं सत्यामपि प्रीतौ स्वकीयान् वर्त्तिपदार्थान्न जानाति। वर्त्तिपदेषु हि प्रकृतिस्वरादिमत्कारकरणात्। अत्र यद्वक्तव्यं तदुपकारप्रशंसायामभिहितम् ॥ २४ ॥

अथान्यामाह—

**बाधमानोऽन्यमन्येन ध्रुवं केनापि बाध्यते।**
**लुनीत इत्यत्र परस्तत्रोदाहरणं स्वरः ॥ २५ ॥**

ध्रुवं निश्चितमन्यं तटस्थं निरपराधं वा बाधमानः पीडा कर्त्ता पुमानन्येन केनापि प्रबलेन बाध्यत एव। उक्तञ्च व्यासेन—

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्।
आत्मनः प्रतिकूलानि परस्य न समाचरेत् ॥
न पापे प्रति पापः स्यात् साधुरेव सदा भवेत्।
आत्मनैव हत.पापो यः पापं कर्त्तुमिच्छति ॥
नोद्यमानोपि पापेषु शुद्धात्मा न प्रवर्त्तते।
वार्यमाणोऽपि पापेभ्यः पापात्मा पापमिच्छति ॥
ते साधवः सुजन्मानस्तैरियं भूषिता च भूः।
अपकारिषु भूतेषु ये भवन्त्युपकारिणः ॥

इत्यादिपुराणवाक्यालोचनात् केनापि कस्मिन्नपि विषये कोपि नोद्वेजनीय इति नीतिविदां मतम्। अत्र दृष्टान्तमाह लुनीत इति। लूञ छेदने आदिस्तस्माद्वर्त्तमानार्थे तसि परे क्र्यादिभ्यःश्ना ( पा० ३।१।८१ ) इति श्नाविकरणः प्वादीनां ह्रस्वः ( पा० ७।३।८० ) इति ह्रस्वः। अत्र धातोः ( पा० ६।१।१६२ ) इति धातोरन्त उदात्तस्तस्य बाधको विकरणस्वरो जातः। सतिशिष्टत्वात्। धातोः परस्मिन् विकरणे प्राप्तत्वात् पर इत्युच्यते सविकरणस्वरः सति शिष्टोऽपि सार्वधातुकस्वरं न बाधत इति लुनीत इति तस एवोदात्तः स्वरो भवति। कुतः। ज्ञापकात्। यदयं तास्यनुदात्तेत् ( पा० ६।१।१८६ ) इति तासेः परस्य ल सार्वधातुकस्यानुदात्तत्वं शास्ति तज्ज्ञापकमुक्तार्थस्य। अन्यथा कर्त्तारावित्यादौ लकारमात्रापेक्षत्वादन्तरङ्गेषु लादेशेषु सत्सु लकारविशेषापेक्षे पश्चान्तासौ

सतिशिष्टे तत्स्वरे शेषनिघातेनैव सिद्धेरनर्थकं तत्स्यादिति। तस्माल्लुनीत इत्यन्तोदात्तं पदमाद्ययोरचोः शेषनिघात इति तत्त्वम् ॥ २५ ॥

अथापरमाह —

**कालं प्रतीक्षेत परैर्बाध्यमानोऽपि धीरधीः।**
**किं न धातुस्वरो जातु बाधते प्रत्ययस्वरम्॥ २६ ॥**

धीरधीः स्थिरबुद्धिः पुमान् परैः शत्रुभिः बाध्यमानोपि पीड्यमानोपि स्वपुरुषार्थसमयाभावात् प्रतिकूलं दैवात् वा कालं शुभदैवं प्रतीक्षेत तावन्तं कालं तिष्ठेत्। यतो नानाविधावस्थाप्रदर्शको हि कालः। कदाचिद् दुरवस्थां कदाचिच्छुभावस्थां च प्रदर्शयतीति। अत्र दृष्टान्तः किं नेति। जातु कदाचिद्धातुस्वरः स्वबाधकं प्रत्ययस्वरं गोपायतमि[1]त्यत्र प्रत्ययान्तावस्थायां सति शिष्टत्वात् किं न बाध्यतेऽपि तु बाधत एव ॥ २६ ॥

अथराजनीतिमुपजातिकयाह —

**देयोऽवकाशो विषये स्वकीये कस्यापिनो नीतिविदा विचार्य।**
**दत्तावकाशो यजतावटा हि ततस्तमुत्सारयति प्रसारः॥२७॥**

---

१. अयं भावः

सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणे इत्यत्र। यो हि यस्मिन् सति शिष्यते स शिष्टः तस्य बाधको भवतीत्यर्थः। एतच्च सति शिष्टस्य बाधकत्वं न्यायसिद्धम्। तथा हि कार्यकालपक्षे उदात्तस्वरितविधिभिरेकवाक्यतामापन्नया 'अनुदात्त पदमेकवर्जम्' इति परिभाषया शेषनिघातः क्रियते तत्रोत्सर्गस्यापवादस्य वा चरमा या प्राप्तिः तेनेकवाक्यतापन्नया अनया पूर्वा प्रवृत्तिर्बाध्यते इति औपगवत्वमित्यत्राण्प्रत्यये त्वप्रत्यये च "आद्युदात्तश्च" इति प्रवर्तमानं स्वस्यैव प्रथमां प्रवृत्तिं बाधते द्वितीयप्रवृत्या लक्ष्यं परिनिष्ठापयतीति दिक्। "गोपायतं नः" उदाहरणम्।

ननु यदि सति शिष्टः बलीयाँस्तर्हि सति शिष्टत्वात् विकरणस्वरोऽपि बलीयान् स्यात् तथा च 'गृणीत' इत्यादि मध्योदात्तं पदं स्यादत आह-अन्यत्र विकरणेभ्य इति। सति शिष्टोऽपि विकरणस्वरः प्रत्ययस्वरं न बाधते। अत्र च ज्ञापकं तासेः परस्य लसार्वधातुकस्यानुदात्तविधानम्। तथाहि यद्यपि लावस्थायां तासिर्विधीयते तथापि लकारमात्रापेक्षत्वादन्तरङ्गेषु परेषु च लादेशेषु कृतेषु पश्चात्तासिरिति तत्स्वरस्य सति शिष्टत्वात् शेषनिघातेनैव सिद्धेरनर्थकं तत्स्यात् इति अन्यत्र विकरणेभ्य इत्यत्र मानम्।

नीतिविदा राजादिना विचार्य्यास्मद्विषये य आयास्यति, स समीचीनो-ऽसमीचीनो वेति विचारमकृत्वा स्वकीये विषये देशेऽवकाशोऽवस्थानार्थं स्थानविशेषः सर्वथा न देयः । अत्र दृष्टान्तः । दत्तेति । अविचार्य्येत्येतदिहापि सम्बध्यते । हि यस्माद्यजतौ यजधातुविषये यजेः धातोर्भावार्थे जातस्य लङः स्थाने ते कृते यक्ि च कृते सति लुङ्लङ्लृङ्क्ष्वडुदात्तः (पा० ६।४।७१) इति अडागमेन स्वस्यानित्यतां संप्रसारणपरत्वाभावं चाविचार्य वचि स्वपियजादीनां किति ( पा० ६।१।१५ ) इति यजादित्वात् प्रसारः सम्प्रसारणम् तदाश्रयं पूर्वरूपञ्च भवदजादित्वं धातोः संपाद्याडागमबाधकम् अडजादीनाम् (पा० ६।४।७२) इत्यडागमं विधत्ते । एत आटश्च (पा० ६।१।९०) इति वृद्धिरैज्यतेति वपेरौप्यत इति सिद्धं रूपं भवति । अत्राडागमयकोर्मध्ये जातयक् प्रत्ययकृतः प्रसारः तमडागममुत्सारयति दूरीकरोतीत्यर्थः । अविचारे चैवं निष्पन्नम् ।

वस्तुतस्तु ऐज्यत औप्यते इत्यादौ लकारमात्रापेक्षत्वादन्तरङ्गलादेशाः लकारविशेषमङ्गं चापेक्षमाणो वहिरङ्गोऽडागम इति लादेशे ते जाते सत्यनन्तरं कृताकृतप्रसंगित्वान्नित्यो यग् भवति । अडाकृते विकरणे विकरणान्तोयगस्य प्राप्नोत्यकृते धातुमात्रस्येति शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ( पा० ४४ ) इत्यटोऽनित्यत्वम् एवं सति जाते विकरणे यजादित्वात् सम्प्रसारणमेव कृताकृतप्रसङ्गित्वेन नित्यत्वात् भवति । सति तस्मिन् धातोरजादित्वे सम्पन्ने सत्याटः प्राप्तेरटो न प्राप्तिरनित्यत्वादेवेति तस्मान् मिथ्यैवाटायकोऽवकाशो दत्तः किन्तु सम्प्रसारणेन तदीयो विषयोऽपहृत इति ।

नन्वेवं चेदाटाड्बाधितस्तर्हि संप्रसारणस्य किमागतं, नहि सम्प्रसारणापेक्षमटो नित्यत्वं यस्य च निमित्तं लक्षणान्तरेण विहन्यते नैतदनित्यं भवतीत्यभियुक्तोक्तिरस्तीति चेत् । सत्यम् । इदं वचोऽसार्वत्रिकमित्यस्याऽनित्यतां विचारयताऽडागमेन सत्पुरुषेणेव स्वविषये दत्तः संप्रसारणायावकाश इत्याशया तथाभिधानमित्यदोषः ।

वस्तुतस्तु आडजादीनाम् (पा० ६।४।७२) इति सूत्रं दूषितं भाष्यकृता । अत्र पूर्वपक्षसमाधाने विधाय प्रत्याख्यानमेव सिद्धान्तितम् । तत एवावधार्यम् ॥ २७ ॥

अथान्यामाह—

**मैत्रीमत्र पवित्रां द्वन्द्वपदेभ्यः सुबुद्धयो धोत्वम् ।**
**अन्योन्यार्थविहीनं यानि स्वार्थं न वाञ्छन्ति ॥ २८ ॥**

भो नीतिविदः सुबुद्धयोऽत्र नीतिविषये द्वन्द्वपदेभ्यो द्वन्द्वसमासनिष्ठेभ्यः पदेभ्यः प्लक्षन्यग्रोधादिभ्यः मैत्रीं मित्रतां पवित्रां शुद्धामकलुषामधीध्वं यूयं पठन्तु । प्लक्षन्यग्रोधावित्यत्र यानि प्लक्षादिपदानि अन्योन्यार्थंविहीनं परस्परार्थरहितं स्वार्थं न वाञ्छन्ति यथा प्लक्षपदं न्यग्रोधार्थसहितमेव स्वार्थमभिधत्ते न केवलम् । एवं न्यग्रोधपदं प्लक्षपदार्थसहितं च पदार्थमभिधत्ते न केवलम्, युगपदाधिकरणवचनो द्वन्द्व इत्युक्तेः । अत्र यद्वक्तव्यं तद्रूपकारप्रशंसायां प्रथमपद्येऽभिहितम् तत एवावधार्य्यम् ॥२८॥

अथापरामाह—

**गतिसंज्ञा इव प्राज्ञा विनयान्नीचतां गताः ।**
**तिङन्त इव शोभन्त उदात्तगुणशालिनि ॥ २९ ॥**

उदात्तैः समीचीनैर्दातृत्वादिभिर्गुणैः शालिनि शोभमाने पुंसि विनयात् नीचतां नम्रतां गता एव प्राज्ञा नीतिमन्तः शोभन्ते तस्मादिहलोकपरलोकेच्छुरुदात्तगुणवत्पुरुषं प्रति न क्वचिदपि कार्ये मनागपि मानं बिभृयादित्यर्थः । अत्र दृष्टान्तः । तिङन्त इति । यथा गतिसंज्ञकाः शब्दाः उदात्तगुणशालिनि तिङन्ते पदे परे सति नीचतामनुदात्ततां[1] गता शोभन्ते । यथा । 'यत्प्रकरोति' इत्य यदा यच्छब्दो न प्रयुज्यते किन्तु प्रकरोतीत्येव प्रयुज्यते तदा तिङ्ङतिङः ( पा० ८।१।२८ ) इति तिङन्तस्य निघातः । प्रशब्द उदात्तः निपाता आद्युदात्ताः ( फि० सू० ८० ) उपसर्गाश्चाभिवर्जम् ( फि० सू० ८१ ) इति वचनात् । यदा यच्छब्द आदौ प्रयुज्यते तदा निपातैर्यद्यदि हन्त कुविन्नेच्चेच्चण कच्चिद्यत्र युक्तम् ( पा० ८।१।३९ ) । एतैर्निपातैर्युक्तं तिङन्तमनुदात्तं न भवतीति अनुदात्तनिघातात् तिङि चोदात्तवति ( पा० ८।१।७१ ) । उदात्तवति तिङन्ते पदे परे गतिरनुदात्तो भवतीति सूत्रेण विहितनिघाता प्रादयो नीचतया शोभन्त इत्यर्थः ॥ २९ ॥

अथेमामेव नीतिं भङ्ग्यन्तरेणाह—

**वरं देशापशरणं त्यक्तं वा जीवितं परम् ।**
**गतेरिव च नीचत्वमुदात्तं तु परं प्रति ॥३०॥**

पुंसो देवदत्तस्य शत्रुदेशादपशरणं पलायनं वरं किंचित् समीचीनम् । यदा देशापशरण कर्त्तुमशक्यं तदा वा पक्षान्तरे जीवितं त्यक्तं वरं तदापि किंचित् समीचीनम् । 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक् प्रिय इत्यमरः ।' परन्तु परं शत्रुमुदात्तगुणयुक्तं प्रति नीचत्वं न तु वरं, नैव श्रेष्ठमित्यर्थः ।

---

१. नीचैरनुदात्त इति लक्षणा ।

अत्र दृष्टान्तः। गतिरिवेति। यथा परमुदात्तं तिङन्तं प्रति नीचमनुदात्तत्व-मवलम्ब्य यत्प्रपचतीत्यत्र गतिः प्रशब्दः तिष्ठति गतिश्चेति (पा० १।४।६०) प्रादीनां गतिसंज्ञा। पूर्वपद्योक्त एव सर्वोऽभिप्रायोऽत्र व्याकर्त्तव्यः ॥ ३० ॥

अथार्यंयान्यामाह—

**द्रव्यप्रकर्षवृत्ति न गुरावपि तद्धितेपि जनः।**
**वैयाकरण इवामौ शिव शिव नावेदितुं क्षमते ॥ ३१ ॥**

अयं कलिकालोद्भवो जनो गुरौ पित्रादावपि तद्धिते तस्मै धनादि हितं कुर्वत्यपि द्रव्यस्य धनस्य प्रकर्षे वृत्तिमाधिक्यनिष्पत्ति शिव शिवेति लोके खेदात्[1] प्रत्यावेदितुं वक्तुं न क्षमते। केनाप्युपायेन नाशयितुमेव समीहत इत्यर्थः। यदि पित्रादेरपि न क्षमते तदोदासीनस्यापि कथं क्षमिष्यतीति भावः। अत्र दृष्टान्तः। आमाविति। यथा आम् प्रत्यये दीर्घं च (पा० १।४।१२) इतिगुरुसंज्ञे तद्धिता; (पा० ४।१।७६) इत्याधिकारात् तद्धितसंज्ञे च द्रव्यप्रकर्षे वृत्ति विधानं वैयाकरणोऽद्रव्यप्रकर्ष इति वचनाद्वक्तुं न क्षमते। यथा पंचमचतुर्थवादे किमेतिङव्ययघाद्याम्वद्रव्यप्रकर्षे' (पा० ५।४।११)। किम एकारान्तात्तिङोऽव्ययाच्च यो घस्तदन्ताच्च प्रातिपदिकाद् द्रव्यप्रकर्षे आम् प्रत्ययो भवति घशब्देन तरप्तमपौ यद्यपि द्रव्यस्य स्वतो न प्रकर्षयोगः, किन्तु क्रियागुणयोरेव तथापि क्रियागुणस्थस्य तस्य यदा द्रव्ये उपचारस्तदायं प्रतिषेधस्तथाचोच्चैस्तरस्तरुरित्येतमाम्। उच्चैस्तराम्। उच्चैस्तमाम् इति शिवम् ॥३१॥

ज्योतिर्विद्वरनीलकण्ठविदुषः श्रीचन्द्रिकायास्तथा।
पुत्रेणाहिगवीप्रसारितधिया गोविन्दनाम्ना कृते ॥
श्रीसभ्याभरणस्य सुज्ञसुखदेऽल्पे रश्मिमालाभिधे।
व्याख्याने शशिभृत्पुरीवसतिनोल्लासोह्यभूदष्टमः ॥

इति

श्री विद्वद्दैवज्ञमुकुटहीरनीलकण्ठज्योतिर्वित्सूनुगोविन्दज्योतिर्विद्विरचितायां सभ्याभरणटीकायां रश्मिमालाभिधायां नीतिप्रशंसानामकः अष्टम उल्लासः।

॥ समाप्तिमगमत् ॥

●

---

१ [illegible] रणप्रकारः।

# नवम उल्लासः

**गीर्वाणवन्द्यपादाब्जं हेरम्बं सिद्धिबुद्धिदम् ।**
**नत्वा दैवप्रशंसाख्यमुल्लासं व्याकरोम्यहम् ।। १ ।।**

अत्र दैवप्रशंसाख्यमुल्लासं विवक्षुर्ग्रन्थकृद्रामचन्द्रः प्रथमपद्येनानुष्टुभाख्येन तामाह—

उदात्तपदमारूढे सेवितेपि चिरं तिङि ।
उच्चतां न गतेर्जाता किं सिध्यति विना विधिम् ।।

द्विविधं दैवमशुभं शुभञ्च । तत्र अशुभदैवस्य वहुवर्णनायोग्यत्वाभावादेकेनैव पद्येनाशुभदैववर्णनमुपक्रमते— उदात्तेति ।

गतेः लक्षणया गतिमतो ज्ञानवतः पुंस उदात्तपदं महाराजपदमारूढे देवदत्ते चिरकालं सेवितेपि कृतसेवेप्युच्यतामहत्ता न जाता । सा विधिमनुकुलदैवं विना किं सिध्यति किन्तु नैव सिध्यतीत्यर्थः । उक्तञ्च महाभारते—

पूर्वदेहकृतं कर्म न कश्चित् पुरुषो भुवि ।
वलेन प्रज्ञया वापि शक्यते कर्त्तुमन्यथा ।।
अन्यथा शास्त्रगर्भिण्या धिमा धीरोऽर्थमीहते ।
स्वमिव प्राक्तनं कर्म विदधाति तदन्यथेति ।
तथा च माध; ।
प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्त्तुरभून्न पतिष्यतः करसहस्रमपि ।। इति ।।

अत्र दृष्टान्तः । यथा यत्प्रपचतीत्यत्र यद्योगे तिङ्ङतिङः (पा०८।१।२८) इति प्राप्तस्य निघातस्य निपातैर्यद्यदीतिनिषेधात्तिङन्तो उदात्तपदमारूढे सति सत्सेविनो गतेर्गतिसंज्ञस्य प्रादेर्यदि तिङि चोदात्तवति (पा० ८।१।७१ ) इति निघातविधानान्नीचता अनुदात्तता जाता, नतु उदात्तता । अत्र पाणिनिसूत्ररूपो विधिरेव कारणं वक्तव्यम् । तदेवदैवमिति वक्तव्यम् ।। १ ।।

अथ शुभदैवप्रशंसामाह—

**असत्कल्पसहायोपि लघुतालिङ्गितोपि च ।**
**अडागम इवोदात्तोऽनुकूलविधिना न कः ।। २ ।।**

स्थिता अप्यविद्यमानतुल्या सहाया यस्य लाघवेन लोकगौरवाभावेनालिङ्गितोपि च देवदत्तादि क पुमाननुकूलविधिना शुभदैवेनोदात्तो

महत्त्वयोग्यो राजपदयोग्यो न जायते। अपि तु सर्वो शुभदैवेन महान् भवति। तस्मात् कर्मैव पुरातनं सुखोपपत्तिहेतुरिति विचिन्त्य परहितमेव चिन्तनीयम्। उक्तञ्च—

न कोऽपि कस्यचित्कर्ता शुभे वाप्यशुभेपि वा।
पूर्वजन्मार्जितं कर्म फलं भुङ्क्ते नरोऽवशः॥
आगमिष्यन्ति ते भावा ये भावा मयि भाविताः।
अर्हन्तैरनुगन्तव्यो न तेषामन्यतो गतिः॥
येन यत्रोपभोक्तव्यं सुखं वा दुःखमेव वा।
स तत्र बद्धो रज्ज्वेव बला[1]द्दैवेन नीयत॥ इति॥

अत्र दृष्टान्त। क इव अडागम इव। च पूर्वोक्तगुणविशिष्टोऽस्ति। यथा अडागमे येषु लुङलङ्लृङ्क्षु विहितास्ते असत्कल्पा एव; तिबादिभिः प्रत्ययैर्बाधितत्वात्। स्वयं च ह्रस्वं लघु (पा० १।३।१०) इति लघुसंज्ञा-सम्बलितोपि चेत्यनुकूलेन लुङ्लङ्लृङ्क्ष्वडुदात्तः (पा० ६।४।७१) इति पाणिनिवचनरूपेण विधिनोदात्तः कृतः॥ २॥

अथ पुनः शुभदैवप्रशंसामाह—

**अनुकूलेन विधिना प्रत्ययानामिवाक्विपः।**
**तद्धर्माद्याप्तिरभितः किं परेषामसूयया॥ ३॥**

पुंसामनुकूलेन विधिना दैवेनाभिहितसर्वदेशेपि तद्धर्माद्याप्तिस्ते च धर्मादयश्च धर्मार्थकाममोक्षास्तेषामाप्तिः प्राप्तिर्भवति परेषां दुष्टानाम-सूयया गुणेषु दोषारोपेण किं स्यान्न किंचिदित्यर्थः। असूया तु दोषारोपो गुणेष्वपीत्यमरोक्तेः। उक्तं च—

"उपभोगादृते यस्य नाश एव न विद्यते।
प्राक्तनं बलवत् कर्म कोऽन्यथाकर्त्तुमर्हति॥" इति

अत्र दृष्टान्तः। आक्विपः प्रत्ययानामिव तद्धर्माद्याप्तिरस्ति। यथा— आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु (पा० ३।२।९३४) भ्राजभास (पा० ५।४।३) इति क्विमभिव्याप्येतद् ऊर्ध्वं ये प्रत्यया विधास्यन्ते ते तच्छीलादिषु कर्त्तृषु ज्ञेयाः। मूले तद्धर्मादीति बहुव्रीहितत्पुरुषयोस्तन्त्रेण निर्देशः। तद्धर्मस्यादिस्तच्छीलत्वम्। तद्धर्म आदिर्यस्येति तत्साधुकारित्व-मेवं सति तच्छीले तद्धर्मे तत्साधुकारिणि चेत्यर्थः। तच्छीले वदिता

---

१. दैवेनेति पा०।

जनापवादान् । तृन्योगे षष्ठी निषेधाद् द्वितीया तद्धर्मे—वधसूढां मुण्डयितारः श्राविष्ठायना भवन्ति । तद्धर्मे—श्राद्धे सिद्धे आह्वरका अपहर्त्तारो भवन्तीति ॥ ३ ॥

अथान्यदाह—

**आक्षिप्य चैकहस्तात् कुरुते हा विधिरधीनमन्यस्य ।**
**पश्य यदुदात्तलक्ष्मीः सुपि संबुद्धेः समुल्लसति ॥ ४ ॥**

हा इति खेदे विधिर्दैवं एकस्य पुंसो हस्तादाक्षिप्याकृष्य पुमांसमन्यस्याधीनं कुरुते । तस्मात् प्राचीनकर्माधीने संपदापदाविति विचिन्त्यात्मसुखेन पुरुषेणाक्षिणी निमील्य मर्षणीयमखिलम् । उक्तञ्च—

पंचैतानीह सृज्यन्ते गर्भस्थस्यैव देहिनः ।
आयुः कर्म च वित्तञ्च विद्या निधनमेव च ॥

यद्भावि तद्भवति नित्यमयत्नतोपि ।
यत्नेन चापि महता न भवत्यभावि ।
इत्थं विधातृवशवर्तिनि जीवलोके
किं शोच्यमस्ति पुरुषस्य विचक्षणस्य ॥

अत्र दृष्टान्तः । सम्बुद्धेरुदात्तलक्ष्मीः सुपि सुबन्तो समुल्लसतीति यत्र त्वं पश्येति वाक्यर्थः कर्म । यथा मद्राणां राजन्नित्यत्र षाष्ठिकमामन्त्रितस्य ( पा० ६।१।१९८ ) इ त्यन्वेति प्राप्तमाद्युदात्तत्वं सुबामन्त्रिते पराङ्गवत्स्वरे ( पा० २।१।२ ) इति पराङ्गवद्भावविधिना सुबन्ते निधीयत इत्यर्थः । अत्र च यद्वक्तव्यं तत्सत्प्रशंसायामुक्तम् ॥ ४ ॥

अथ प्रथमपद्योक्तामशुभदैवप्रशंसां भङ्ग्यन्तरेणाह—

**जायन्ते गुणिसङ्गेपि विना न विधिना गुणाः ।**
**नीचतैव गतेर्यस्मादुदात्तेपि परे ङिति ॥ ५ ॥**

पुंसो गुणिनां सङ्गेपि विधिना शुभदैवेन विना गुणा न, जायन्ते । भाग्यं विना सत्सङ्गतिरपि न फलतीत्यर्थः । अत्र दृष्टान्तः । यस्मादुदात्तवति तिङि परे गते नीचतैव जाता । यथा 'यत्प्रपचति' इत्ययं दृष्टान्तः । प्रागुपपादितः ॥ ५ ॥

अथ शुभदैवप्रशंसामाह—

**नित्यमङ्गानि पुष्णाति यः स्वकीयानि केवलम् ।**
**अडागम इवोदात्तो विधिना क्रियतेऽपि सः ॥ ६ ॥**

स पुमान् देवदत्तो विधिना भाग्येनोदात्तो महत्त्ववान् क्रियते स कः। यः पुमानैश्वर्येण महत्त्वं प्राप्य केवलं स्वकीयान्यङ्गानि नित्यं पुष्णाति, न तु तत्संपदा सुहृदां कश्चिदुपभोगः संभावितः। क इवाडागम इवेति दृष्टान्तः। यथा लुङ्लङ्लृङ्क्ष्वडुदात्तः (पा० ६।४।७१) इति विधिबोधितोऽडागमोप्यभवदभूदित्यादिषु स्वकीयमङ्गं यस्मात् प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम् (पा० १।४।१३) इति लक्षणलक्षितं पुष्णात्युपचयं नयति न तु परमुपचिनोति विधिना चोदात्तो भवतीति साम्यसिद्धिः ॥ ६ ॥

अथ त्रिभिर्पद्यैर्वक्रोक्तीराह—

**गुरुलघुतानवलोकात् किमिह विचित्रं यदर्चयन्त्यज्ञाः।**

**साम्येनाटमटं वा पाणिनिरपि चेदुदात्ततां नयति॥ ७ ॥**

आर्येयम्। अज्ञाः मूर्खाः गुरुता-लघुतयोरनवलोकात् विद्यावान् पूज्यः निर्गुणोऽपूज्य इत्यनालोच्य यं कंचन साधारण्येनार्चयन्ति पूजयन्ति तत्तदिह संसारे किं विचित्रं किमाश्चर्यं न किमपीत्यर्थः। अत्र दृष्टान्तः। पाणिनिरपि ज्ञानवान् सन् लुङ्लङ्लृङ्क्ष्वडुदात्तः (पा० ६।४।६१) इत्यट ह्रस्वत्वे लघुसंज्ञस्य तथा आडजादीनाम् (पा० ६।४।७२) इत्यत्राप्युदात्तग्रहणानुवृत्तेः दीर्घत्वेन गुरोराटोप्युदात्तत्वं सम्येन नयति प्रापयति। चे[1]त्पादपूरणे ।७॥

अथान्यामाह—

**दृष्ट एकाश्रयेन्यस्मिन् सुसिद्धार्था अपि द्विजाः।**

**आभीयशास्त्रसदृशाः क्षोभमायान्ति सत्वरम्॥ ८ ॥**

द्विजा ब्राह्मणा अन्यस्मित् द्वितीये एकाश्रयेऽसाधारणे आश्रये पालके राजादौ दृष्टे सति सुसिद्धार्था ऐश्वर्यप्राप्त्या कृतकृत्या अपि सत्त्वरं शीघ्रमेव परस्परस्योपरि क्षोभं आ यान्ति परस्परासहिष्णुत्वात्। विशेषणेन दृष्टान्तमाह आभीयशास्त्रसदृशाः। असिद्धवदत्राभात् (पा० ६।४।२२) इत्याभीयशास्त्रम् समानाश्रये तस्मिन् क्षोभमसिद्धत्वमायाति। यथा जहीति। हन्तेः हौ परे हन्तेर्जः (पा० ६:४।३६) इतिजादेशे कृतेऽतोहेरिति भवइत्यादिवल्लुक् प्राप्नोत्यसिद्धत्वान्न भवति। स्वभाववर्णनमिदम्। अत्र यद्वक्तव्यं तदुपकारप्रशंसायामुक्तम् ॥ ८ ॥

अथापरामाह—

**किं चित्रं यदि लोका अज्ञाः सर्वे समर्थपक्षे स्युः।**

**इच्छति पाणिनिरपि चेद् द्विविधा तस्यैव वृत्तिमिह ॥९॥**

---

१. श्लोके चेत् इति पदं पादपूरणे इति तदर्थः।

आर्येयम्! अज्ञाः सर्वे लोकाः यदि समर्थपक्षे प्रबले पक्षे स्युः। विवादास्पदीभूते न्याये क्रियमाणे सर्वेऽपि लोकाः वादिप्रतिवादिनोर्मध्ये प्रबलस्यैव पक्षं विधत्ते लाभसत्त्वादत्र किं चित्रं न किमपि। अत्र दृष्टान्तः। पाणिनिरपि अतिज्ञानवान् इह व्याकरणशास्त्रे तस्यैव समर्थस्यैव द्विविधां वृत्तिमिच्छति समर्थः पदविधिः (पा० २।१।१) इति स्मरणात् समर्थस्यैव समासवृत्तिः तथा समर्थानां प्रथमाद्वा (पा० ४।१।८१) इतिसमर्थाधिकारात् समर्थस्यैव तद्धितवृत्तिं च यथेच्छति ॥ ९ ॥

अथान्योक्तिमाह—

**उदात्तपदसम्प्राप्तिस्तिङ् ते कुत्रोपयुज्यते।**
**उच्चतानुगतस्यापि यत्स्वीयापि गता गतेः ॥ १० ॥**

हे तिङ् प्रत्यय ते उदात्तपदसम्प्राप्तिः कुत्रोपयुज्यते नु उपयुक्ता भवति अपितु न कुत्राप्युपयुज्यते। यद्यस्मात् कारणात् उच्चतयोदात्ततयाऽनुगतस्य यत्प्रपचतीत्यादौ संसृष्टस्य गतेर्गतिसंज्ञस्य यस्य स्वीया आत्मीया निपाता आद्युदात्ता (फि० सू० ८०) उपसर्गाश्चाभिवर्ज्यम् (फि० स ८१) इति स्वसम्बन्धिन्युदात्ततापि तिङि चोदात्तवति (पा० ८।१।७१) इति निघातविधानाद् गतेत्यर्थः। अथ च दातारं प्रत्युच्यते।[1] हे दातस्ते महत्त्वपदप्राप्तिरस्माकमुपकारभावात् कुत्रोपयुक्ता यतः कारणात् उच्चतयेश्वर्येणानुगतस्यापि मे भवत्सेवासक्तत्वान्मदीयाप्युच्चता मान्यता गतेत्यर्थः। यत्सेवया स्वकीयमपीष्टं नश्यति ततोऽधिकं मया त्वत्तो लब्धव्यमित्याशा मुधैवेति भावः ॥ १० ॥

अथापरामन्योक्तिमाह—

**असत्कृत्य गुरुं शासेः शाभावं यत्प्रवर्त्तते।**
**तदेतन्मध्यमोत्पन्ने धित्वे नानुचितं मनाक् ॥ ११ ॥**

शाधीत्यत्र शासो हेर्हुंझल्भ्यो हेर्धिः (पा० ६।४।३५) इति विहितं शासेः शाभावमसत्कृत्यासिद्धतां नीत्वा यत्प्रवर्तते तदेतन्मध्यमपुरुषं हि शब्दमाश्रित्योत्पन्ने धित्वे मनागीषदपि नानुचितं समानाश्रयस्याभीयस्याभीये कर्त्तव्येऽसिद्धत्वादित्यर्थः।[2] अथ च यो मध्यमान्निकृष्टादुत्पन्नो भवति स गुरुमध्यापकं तिरस्कृत्य प्रवर्त्तते। मयेदं ममेयं स्वत एव ज्ञातं किं गुरुणाध्यापितमिति ब्रुवाण आस्ते। तादृशे पुंसि किमनुचितमपितु[3] उचितमेवेत्यन्यं

---

१. अन्योक्त्या इति शेषः। २. तादृशे इति शेषः।

३. तिरस्कारकारिण इति शेषः।

प्रत्युक्तिः। एतादृशाः शिष्याः गुरुणानाध्यापनीया इति तात्पर्यार्थः। एतमर्थं साक्षाच्छ्रुतिराह—

विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि।

असूयकायानृजवे अयताय न मां ब्रूया वीर्यवती तथा स्याम्॥ इति

अस्यार्थः। कामस्व[1]रूपिणी विद्या ब्राह्मणमाजगाम वै निश्चितं पश्चादेवर्चः। किमाह भो ब्राह्मण त्वं मा इति मां गोपाय पाहि यतस्तेऽहं शेवधिर्निधिरस्मि। निधिर्ना शेवधिरित्यमरः। किं च असूयकाय परनिन्दाकारिणेऽनृजवे कायमनोवाग्भिः कुटिलायायताय [2]विप्रकीर्णेऽप्रियाय शिष्याय मां न ब्रूया न वदेस्तथा सत्यहं वीर्यवती स्याम्। भवेयमिति शिष्योपदेशः॥ ११॥

अथ समासोक्तिमाह—

**अधिकारप्रसिद्धोऽयं स्फुरद्धातुसमाश्रितः।**

**हिमाश्रितो भातितरां शाभावो हि भवानिव॥ १२॥**

अयं शाहौ (पा० ६।४।२५) इति सूत्रेण शासेः शाभावो विहितः स हि भवानुत्तरदिक्कः पर्वतो हिमाचल नामा गौरीगुरुस्तद्वद् भातितरामतिशयेन शोभते। तिङश्च (५।३।५६) इति तरप् किमेतिङव्यय (पा० ५।४।११) इत्याम् स्वार्थे। तत्र हिमवत्पक्षे कीदृशः अधिकारेणोत्तरदिक्स्थपर्वताधिपत्वेन प्रसिद्धः। तथाः स्फुरन्तः प्रकाशमाना ये गैरिकादि धातवस्तैः समाश्रितो व्यासः। तथा हिमेन तुषारेणाश्रितो वेष्टित इत्यर्थः। शाभावपक्षे कीदृशः शाभावः प्रकर्षेण सिद्धः प्रसिद्धः अधिकारे प्रसिद्धः अधिकारप्रसिद्धः हुझल्भ्यो हेर्धिः (पा० ६।४।१०१) इति धिशब्दे शाधीत्यत्र विधीयमाने आभीयमाभीयेऽसिद्धति सिद्धकार्याकरणात् प्रकर्षेण न सिद्ध इत्यर्थः। तथा स्फुरन्तमनुशिष्टचर्थेन प्रकाशमानं शासिधातुं समाश्रितः। तथाहि प्रत्यये परे शाहौ (पा० ६।४।३५) इति सूत्रेण विधीयमानः सन् हि निमित्तत्वेनाश्रितः। अत्र शाभावो हिमवानेवेति चरण एव समस्यारूपयुक्तः। तयोः शब्दसाम्ये भिन्नार्थकेन पूरणं ग्रन्थकृताकृतम्॥ १२॥

अथ नित्यताप्रतिपादनान्योक्तिमाह—

**एकाश्रयोऽपि स्वादीनां ङ्याप्प्रातिपदिकं यदि।**

**न चिरं स्वाश्रयस्तर्हि तत्रास्था का विवेकिनः॥ १३॥**

---

१. इच्छया रूपं धृत्वेत्यर्थः। २. ब्रह्मचर्याच्च्युतायेत्यर्थः।

ङ्याप्प्रातिपदिकात् ( पा० ४।१।१ ) इत्यधिकारात् स्वौजसमौट् ( पा० ४।१।२ ) इत्यादिसूत्रेणोत्पन्नः स्वादिप्रत्यय एकाश्रयः ङ्याप्प्रातिपदिकाश्रयोपि सन् तथापि ङ्याप् च प्रातिपदिकं चैतेषां समाहारो ङ्याप् प्रातिपदिकं हल्ङ्याब्भ्योदीर्घात् सुतिस्यपृक्तं हल् (पा ० ६।१।६८ ) इति सोर्लोपविधानात्. स्वाश्रयः सोः प्रथमैकवचनस्य सुप्रत्ययस्याश्रयश्चिरं बहुकालं भवति। तर्हि सुप्रत्यये विवेकिनो व्याकरणलक्षणस्य साध्वसाधुप्रयोगविवेकवतः पुरुषस्य स्वीये कृत्ये आस्था निश्चयात्मिका बुद्धिः का अपितु न कापि स्यादित्यर्थः। आश्रयशब्दो नित्यपुंलिंगः। अथ च स्वशब्दस्य धनवाचित्वात् यो धनादीनामेक आश्रयो नलहरिश्चन्द्ररामादिरिदानीन्तनो वा कश्चिदकब्बरसुरत्राण[1]सदृशोवा सोपि चेच्चिरकालं स्वाश्रयो धनाश्रयो नाभूत् तर्हि धनादौ विवेकवतः पुंसोऽस्मदादेः अल्पद्रव्यवतः आस्था स्थैर्य्यधीर्न कापीति श्लेषः। उक्तञ्च—

या स्वसद्मनि पद्मेऽपि संध्यावधि विजृम्भते।
इन्दिरा मन्दिरेऽन्येषां कथं स्थास्यति सा चिरम्॥
दातव्यं भोक्तव्यं सति विभवे संचयो न कर्तव्यः।
पश्येह मधु[2]करीणां संचितमर्थं हरन्त्यन्ये॥ इति॥

अन्यच्च—

संपदो हि मनुष्याणां गन्धर्वनगरोपमाः।
दृश्यमानाः क्षणेनैव भवन्ति च न भवन्ति च॥ इति॥

ननु ङ्यापो दीर्घात्सुरित्येतावत्सूत्रं विधेयं किमर्थं हलन्तात् सुतिसीनां लोपो विधीयते। सर्वत्र संयोगान्तस्य लोपः ( पा० ८।२।२३ ) इत्यनेनैव सिद्धत्वाद्। उच्यते—राजा, तक्षेत्यादौ संयोगान्तलोपस्यासिद्धत्वान्न लोपो न स्यात्। किं च उखास्रत पर्णध्वत् इत्यादावुखास्रस स इति स्थिते संयोगान्तलोपं येन नाप्राप्तिन्यायेनापवादत्वाद् बाधित्वा स्कोः संयोगाद्योरन्ते च ( पा० ८।२।२९ ) इति धातुसकारस्य लोपः स्यात्ततः स्रंसेरवयवो विभक्तिसकारो न भवतीति वसुस्रंसुध्वंस्वनडुहां दः ( पा० ८।२।७२ ) इति दत्वं न प्राप्नोति। नच संयोगादिलोपं बाधित्वा पूर्वमेव प्रकृतिसकारस्य दत्वं लभ्यते। अपदान्तत्वात्। न हि श्रूयमाणे सौ पूर्वस्य पदसंज्ञास्ति। असर्व-

१. अकबर, सुलतान इति नाम्ना ख्यातौ यवनवंशीयौ राजानौ इत्यर्थः।

२. यद्यपि मधुकरा अपि मधुसंचयं कुर्वन्ति येषामपि सञ्चितानि मधूनि अन्ये हरन्त्यपि तथापि मधुकरीणामिति स्त्रीलिङ्गनिर्देशः स्त्रियः सञ्चयकारिण्यो भवन्ति इति द्योतनाय तासां प्राधान्यद्योतनाय वेत्यर्थः।

नामस्थान इति निषेधात् । अन्यच्च -- अभिनोऽत्रेत्यत्र भिदेर्लङि सिपि श्नमि संयोगान्तलोपे दस्य दश्च ( पा० ८।२।७५ ) इति रुत्वे परस्मिन् कर्तव्ये सिद्धत्वात्, कृते रुत्वे तस्यातोरोरप्लुतादप्लुते ( पा० ६।१।११३ ) इत्युत्वे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वादुत्वं न स्यात् । अपरञ्च । अभिभर्भवानि इत्यादौ तु रात्सस्य ( पा० ८।२।२४ ) इति नियमात् संयोगान्ततकारलोपो न सिद्ध्यतीति कर्तव्यमेव सकलं सूत्रम् । अपृक्तग्रहणन्तु छिनत्ति भिनत्ति इत्यादौ तेस्तकारेकारसमुदायस्य लोपो मा भूदित्येतदर्थम् । द्वितीयहल्ग्रहणन्तु त्रिभेद चिच्छेदेत्यादिषु णलोऽकारस्य लोपो मा भूदित्येतदर्थम् । अथ ङ्याप्पो दीर्घत्वे सत्यपि दीर्घादिति विशेषणमतिरवट्वः, निष्कौशाम्बिरित्यादौ गोस्त्रियो-रुपसर्जनस्य ( पा० १।२।४८ ) इति ह्रस्वत्वे कृते एकदेशविकृतस्यानन्य-त्वात् प्राप्तोपि लोपो मा भूदित्येवमर्थमिति दिक् ॥ १३ ॥

अथापरामनित्यतामाह—

**स्वादौ प्रत्ययवन्तो विलोकयन्तोऽपि तद्विलयम् ।**
**प्रातिपदिकवदगणितलज्जाः किं ते मनुष्यतया ॥ १४ ॥**

ये लोकाः स्वादीनां धनजनादीनां लोपमनेकधा पश्यन्तोपि स्वादौ प्रत्ययं विश्वासं दधति निर्लज्जास्ते मनुष्यतया न गणनीया किन्तु पशव एव एते मन्तव्या इत्यर्थः । अत्र दृष्टान्तः । किंवत् । प्रातिपदिकवत् । यथा प्रातिपदिकमव्ययेषु स्वादीनां लोपं पश्यदपि राम इत्यादौ श्रूयमाण-स्वादि प्रत्ययवदेवेत्यर्थः । यद्वा समासे यत्प्रातिपदिकं सुपो धातुप्रातिपदि-कयोः ( पा० २।४।७० ) इति लोपवत्तदेव वाक्ये प्रत्ययं दधदिति यथा प्राति-पदिकं न लज्जते । तुस्तदपि मनुष्येषु गणनीयम् तुल्यत्वाद् ।

ननु निःसंख्येभ्यो निःकारकेभ्यश्चाव्ययेभ्यः कथं स्वादय इति उच्यते । यदा बहुषु बहुवचनम् ( पा० १।४।२१ ) इत्यादीनां स्वादिविधि-वाक्येनैकवाक्यतेति पक्षस्तदा निःकारकेभ्यो निःसंख्येभ्यश्चाव्ययेभ्यो अव्ययादाप् सुपः ( पा० २।४।८२ ) इति लुक्विधानात् लिङ्गात् स्वादयो भवन्तीति अवश्यं मन्तव्यम् । तथा सति प्रत्ययलक्षणेन पदसंज्ञा तत्संबंधि कार्यं च सिध्यति नान्यथा । यदा तु स्वादिविधिवाक्येन बहुषु बहुवचनम् ( पा० १।४।२१ ) इत्यादेर्भिन्नवाक्यतेति पक्षस्तदा नियमपक्षे तुल्यजातीस्य नियमेन व्यावर्त्तनात् बहुष्वेव बहुवचनं नैकस्मिन् द्वयोः द्वयोरेव द्विवचनं नैकस्मिन्न बहुषु । एकस्मिन्नेवैकवचनं न द्वयोर्न बहुष्वित्येवं तुल्यजातीस्य नियमेन व्यावर्त्तनादसंख्येभ्योऽव्ययेभ्यः स्वादीनामुदयः पुण्यवतामिव द्वेष्यः । विधिपक्षे तु - यत्र संख्याया वाच्यता संभवति तत्र तस्या वाच्यत्वेन विधिर्भवतीत्यव्ययेभ्यस्तु सामान्यविहिताः स्वादयः सन्तीत्यास्ताम् ॥ १४ ॥

अथापरामनित्यतामाह—

**अजादिषु विशिष्टेषु यदाकारो विनश्यति।**
**मतिमानिह तत्को वा विश्वासं कर्त्तुमर्हति ॥ १५ ॥**

अद्भुततपःप्रभावादिविशिष्टेष्वजादिषु ब्रह्मादिदेवेष्वपि यद्यस्मादाकारो हस्तपादादिमान् शरीरा[1]कारो विनश्यति तस्माद्धेतोः को वा मतिमान् विवेकी जलबुदबुदोपममनुष्याद्याकारे इह दृश्यमाने विश्वासं निश्चितधियं कर्त्तुमर्हति तस्मात् स्वशरीराकारे स्थैर्यबुद्धिं विहाय तदर्थिकां पुत्रमित्रपत्नीप्रभृतिष्वासक्तिं चापहाय परमेश्वरचरणाम्भोजयोरेव भावं विदधीतेति भावः। उक्तञ्च वशिष्ठरामायणे रामवाक्यम्।

येषां निमेषोन्मेषाभ्यां जगतां प्रलयोदयो।
तादृशा पुरुषा याता मादृशां गणनैव का॥
तडित्सु शरदभ्रेषु गन्धर्वनगरेषु च।
स्थैर्यं येन विनिर्णीतं स विश्वसितु विग्रहे॥

विग्रहे देहे। तथा भारतेऽपि—

इदं कृतमिदं कार्यमिदमन्यत् कृताकृतम्।
एवमीहासमायुक्तं कृतान्तः कुरुते वशम्॥
कृत्वा कार्यमकार्यं वा पुष्टिर्येषां प्रयच्छति।
तं पुत्रं पशुमित्रार्थे संसक्तमनसं नरम्॥
व्याघ्रःपशुमिवारण्ये मृत्युरादाय खादति।
तृणानिलनदीवेगस्वप्नसंकाशवृत्तिषु ॥
आयुर्यौवनभोगेषु प्राज्ञः को नाम विश्वशेत्।
दह्यमानेऽपि लोकेऽस्मिन् महता कालवह्निना॥
को लभेत धृतिं प्राज्ञः प्रदीप्त इव वेश्मनि।
सर्वशास्त्रप्रमथिनी सर्वोपायविनाशिनी।
अप्रमत्ता प्रमत्ता वा नृणां जागर्त्यनित्यता॥

इत्यादिपुराणवाक्यार्थालोचनेन संसारानित्यतां ज्ञात्वा ब्रह्मद्वेषादिषु स्त्रीपुत्रादिषु चासक्तिं विहाय परमेश्वरचरणाम्भोजध्यानपरो भवेतिश्लोकतात्पर्यार्थः।

---

१. ब्रह्मादयो देवाः शरीरवन्तः इति पक्षे इदम्। मन्त्रात्मका देवा इति तु भिन्नो नयः।

व्याकरणपक्षे यथा गोदः कम्बलद इत्यादिषु आतोऽनुपसर्गे कः ( पा० ३।२।३) इति प्रत्ययः। प्रदा प्रश्रा इत्यादिषुआतश्चोपसर्गे (पा० ३।१।१२६) इत्यङ् प्रत्ययः। अत्रातोलोप इटिचे (पा० ६।४।६४) इत्यनेनाजादि प्रत्ययेषु ङ्किद्विशिष्टेषु परेष्वाकारलोपविधानादिहाकारे विश्वासं स्थैर्यबुद्धि (कः) कुर्यादित्यर्थः ।।१५।।

इति आनित्यताप्रतिपादनम् ।

अथ ग्रन्थकृद्रामचन्द्रभट्टो ग्रन्थसमाप्तिमभिसंधानो व्याकरणशास्त्रान्तस्थम् अ अ इत्यकारद्वयात्मकमुपक्षिपंस्तद्व्याजेन मुक्तिं रथोद्धातावृत्तेन निरूपयति –

**संवृतं यदि मनोऽप्यथ संततं निगममौलिचिन्तया।**

**तत्स्वरूपमधिगत्य निर्वृतो वर्णवद् भवति को न कोविदः ।।१६।।**

अथ शब्दो व्याकरणपक्षे ग्रन्थसमाप्तिसूचकमङ्गलार्थः। कथं चास्य मङ्गलत्वं कथं च तदर्थकत्वमिति। उच्यते---

**ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।**

**कण्ठं भित्वा विनिर्यातौ तेन माङ्गलिकावुभौ ।।**

इत्यभियुक्तवाक्यान् माङ्गलिकत्वम् ।

मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषकाणि चेति महाभाष्यकारोक्तेर्मङ्गलार्थकत्वमिति। तत्र तावद्वेदान्तपक्षे—कः को विदः पण्डितः विद्वान् विद्वान् विपश्चिद्दोषज्ञः सन् सुधीः कोविदो वुध इत्यमरः। स वस्तुतः सर्वं ह वा इदं ब्रह्मेति श्रुत्युक्तेः। ब्रह्मैव सन् अनिर्वचनीयानाद्यविद्याविलासेन जीवतां गतोऽपि यदि मनोन्तःकरणं संवृतं विषयाभिलाषशून्यं जातं ततः संततमविरतं निगमो वेदस्तस्य मौलिरिव मौलिस्तत्त्वमसीति वदान्तवाक्यसारभूतः श्रेष्ठोभागस्तस्य चिन्तया तत्त्वविचारेण संगतम्। क्षीरोदकवत्संमिश्रीभूतं जीवं तस्य ब्रह्मणः स्वरूपं सोऽहमिति श्रुतेरखण्डानन्दमयमधिगत्योपलभ्य निर्वृत्तो वीतशोकः को वा न भवत्यपि तु सर्वोऽपि वीतशोको भवत्येव। अत्र संवृतं मन इत्यनेन शमदमादिसम्पत्तिर्नित्यानित्यवविवेक इहामुत्रफलभोगविरागो मुमुक्षुत्वं चेति साधनचतुष्टयसम्पत्तिरुक्ता भवति।

अस्मिन्पक्षे अथशब्दः साधनचतुष्टयसम्पत्तेरनन्तरं तत्त्वमसीतिवेदान्तवाक्यविचारः कर्त्तव्य इत्येतदर्थः। अत्र शमादिपदार्थानां तत्त्वमसीति वाक्यस्य चार्थनिर्णयो वेदान्तग्रन्थेभ्यो ध्येयः, संक्षेपप्रवृत्तत्वात् मयाऽत्र नोक्तः।

अथ व्याकरणपक्षे—किंवत्। वर्णवत् वर्ण इव। यद्यपि प्रत्याहार-निष्पादिन्यां चतुर्दशसूत्र्यां अज्झल् रूपाः वर्णाः पठिताः सन्ति तथापि प्रथमातिक्रमे कारणाभावादइउणित्येतत् सूत्रस्यादिभूतोऽवर्ण एव गृह्यते तत्रापि सवर्णग्रहणात् ह्रस्वदीर्घप्लुतरूपः समायाति तथाप्येकमात्रिकस्ये-वोच्चारणात् ह्रस्व एवात्रावर्णो गृह्यते। स पूर्वोक्तगुणविशिष्ठो भवति। कीदृशो वर्णः। संवृतः संवृताख्यगुणप्रधानः। वर्णशब्द उभयलिंगः। तत्र ह्रस्वस्या-वर्णस्य संवृतता काशिकायामुक्ता – "ह्रस्वमवर्णं प्रयोगे संवृतमिति"।

ननु—

स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम्।
तेभ्योऽपि विवृतावेङौ ताभ्यामैऔ ततोपि आ॥"

इति नारदशिक्षोक्तेर्दीर्घप्लुतयोर्विवृतयोराकारयोर्ह्रस्वावर्णेन संवृतेन-अणुदित्सवर्णस्य चाप्रत्ययः (पा १।१।६९) इति सवर्णग्राहकता न प्राप्नो-त्यतुल्यप्रयत्नत्वात्। सत्यम्। दीर्घप्लुतयोर्विवृतत्वमेवास्ति। तेषां सावर्ण्य-प्रसिद्ध्यर्थमिह शास्त्रे अकारो विवृतः प्रतिज्ञायते।

यद्येवं लौकिकेपि प्रयोगे तादृशस्यैवाकारस्य प्रयोगः स्यादिति चेत् नामतस्तस्य संवृतस्य प्रयोगार्थं अ अ इति (पा० ८।४।६८) शास्त्रान्ते प्रत्यापत्तिः करिष्यते पाणिनिना। सूत्रार्थस्तु-प्रथमोकार इह शास्त्रे दीर्घप्लु-तयोरुदात्तादिभेदस्य सहितयोरवर्णयो सावर्ण्यप्रसिद्ध्यर्थं विवृतः प्रतिज्ञायते-द्वितीयस्त्वकारः कृतवितत्वस्याकारस्य प्रयोगो मा भूदिति पुनः संवृतः क्रियते। इयमेव हि प्रत्यापत्तिः। स्वरूपाद्धिप्रच्युतस्य पुनस्तत्पदप्राप्तिः प्रत्यापत्तिः। तदेतदभिहितं विशेषणद्वारा विशिनष्टिनिर्वृत इति। संवृतोप्य-कारः सततं निरन्तरं सावर्ण्यकार्यार्थं पुनरत्र निर्वृतोपि विवृतत्वं प्राप्तोपि पुनर्निगमान्तचिन्तया छन्दोवत्सूत्राणि भवन्तीत्यतिदेशाद्वेदागमरूपव्याकरण-शास्त्रसूत्रसमुदायोऽपि निगमशब्दवाच्यस्तन्मौलिरष्टाध्याय्यन्तिमसूत्रमकार-द्वयात्मकम् अ अ इति। तस्य चिन्तया तदर्थविचारणया तत्संवृतरूपं स्वरूपम-धिगत्य प्राप्य कोविदः प्रयोगार्हता निष्पत्या निपुणोऽभूदित्यर्थः।

नन्वतिखट्व इत्यादावाकारस्य विवतस्य ह्रस्वप्रदेशेष्वचश्च (पा० १।२।२८) इत्युपस्थानादचो ह्रस्वेन भाव्यमसति विवृतत्वे आकार अकारं न गृह्णातीत्याकारस्य ह्रस्वो नैव स्यादिति कस्य प्रत्यापत्तिः स्यात्। सत्यम्। नैव लोके नैव वेदे विवृतोऽकारोऽस्ति। कस्तर्ह्यस्ति संवृतः योऽस्ति स भविष्यतीति तस्माद्धातुप्रातिपदिकप्रत्ययनिपातस्थस्याकारस्य संवृत एव प्रयोगो यथा स्यादित्येवमर्था प्रत्यापत्तिरिति सिद्धान्तः। अधिकन्तु प्रयोजनो-ल्लासे विशदमभिहितमिति शिवम्॥ १६॥

ज्योतिर्विद्वरनीलकण्ठविदुषः श्रीचन्द्रिकायास्तथा ।
पुत्रेणाहिगवीप्रसारितधिया गोविन्दनाम्ना कृते ।।
श्रीसभ्याभरणस्य सुज्ञसुखदेऽल्पे रश्मिमालाभिधे ।
व्याख्याने शशिभृत्पुरीवसतिनोल्लासो ह्यभूदन्तिमः ।।

इति

श्रीमद्विद्वद्दैवज्ञमुकुटहीरनीलकण्ठज्योतिर्वित्सूनुगोविन्दज्योतिर्विद्विरचितायां
सभ्याभरणटीकायां रश्मिमालाभिधायां प्रकीर्णकनामको
नवम उल्लासः ।
समाप्तिमगमत्
समाप्तश्चायं ग्रन्थः ।

॥ श्रीः ॥

कविप्रशस्तिः

विदर्भाख्यो देशः सुकृतनिलयो विश्वविदितो-
द्विजेन्द्राणां सम्यग्वसुविकृतिवेदागमवताम् ॥
अधिष्ठानं गोदासरिदमृतपूताऽखिलजनोऽ- ।
स्मिन्भूमीमूर्द्धन्यो वसुनि च पदात्प्रभुयुतः ॥१॥

तत्रासीदवनीश्वराधिपमहामान्यो द्विजेन्द्राग्रणी ।
व्याख्याताभुजगाधिराजभणितेर्हेरम्बसेवारतः ॥
ज्योतिश्शास्त्रविचारणापटुमतिः स हित्यरत्नाकरः ।
श्रीगर्गान्वयमूर्द्धभूषणमणिश्चिन्तामणिस्तान्त्रिकः ॥२॥

अनन्त इति विश्रुतोऽभवदस्य सूनुः कृती ।
विधिज्ञविदुषां वरो गणितशास्त्रपारङ्गमः ॥
गणेशचरणाम्बुजस्मरणलब्धकामो वसन् ।
गिरीशपुरि यश्चकार सर्राण जनैः सन्मुदे ॥३॥

तत्सूनुर्नीलकण्ठः समजनि विवुधो विश्वविख्यातकीर्तिः ।
ज्योतिश्शास्त्रैकतत्त्वप्रकटनपटुगीर्भूमिनाथेशमान्यः ॥
काव्यालङ्कारशास्त्रप्रसृमरधिषणोऽध्यापितानेकशिष्यः ।
स्वाचारातीतगर्गः फणिपतिभणितिव्याकृतौ लब्धवर्णः ॥४॥

तस्मात्सूनुरभूद् गणेशचरणाम्भोजन्मसेवारतो ।
गोविन्दो बुधदेवविन्नतिपदः सिद्धान्तवेत्ताऽतुलः ॥

---

१. वसुः = अष्ट ।

धीरः [1]कुण्डलिभारतीविवरणप्रौढः क्षितीशार्चितो ।
ज्योतिर्ग्रन्थकरोऽखिलावनितलप्रख्यातकीर्त्युच्चयः ॥५॥

शब्दज्ञशिष्यैर्विहितार्थनोऽसावुमेशपुर्यां गुरुपत्प्रसादात् ।
व्यधत्तसभ्याभरणस्य टीकां स्वल्पां यथाशेमुषि रश्मिमालाम् ॥६॥

यदीह किंचित्पदसंध्यलेखि मया तदार्याः परिशोधयन्तु ।
घनोऽज्झितांम्भः सलिलं नदाम्भः स्वच्छं विधायैव पिबन्ति लोकाः ॥७॥

॥ श्रीः ॥

इति श्रीमद्विद्वद्दैवज्ञमुकुटहीरनीलकण्ठज्योतिर्वित्सूनुगोविन्दज्योतिर्विद्विरचिता रश्मिमालाऽभिधा सभ्याभरणटीका संपूर्तिमगमत् ॥

१. कुण्डलिभालती = फणिभाष्यम् ।

# अकारादिक्रमेण-श्लोकसूची।

[ य ]



[ र ]



[ ल ]



[ व ]



[ श ]



[ स ]

